ಸಂವತ್ಸರಶಬ್ದವು ಚತುರ್ಮುಖ ಬ್ರಹ್ಮನನ್ನು ಪ್ರತಿಪಾದಿಸುತ್ತದೆಂದು 'ಸಂವತ್ಸರೋ ವೈ ಪ್ರಜಾಪತಿಃ' ಇತ್ಯಾದಿಯಾದ ವಾಕ್ಯಗಳು ಪ್ರಮಾಣವಾಗಿವೆ. ಆದ್ದರಿಂದ ಚತುರ್ಮುಖಬ್ರಹ್ಮನಿಗೆ ನಿಯಾಮಕನಾದ್ದರಿಂದ ಶ್ರೀಹರಿಯು ಸಂವತ್ಸರಸಾರನೆನಿಸಿದ್ದಾನೆ. ಮತ್ತು ಅಂತರಧಿಕರಣದ ನ್ಯಾಯದಂತೆ ಆದಿತ್ಯಶ್ರುತಿಯು ಸರ್ವಗತನಾದ ವಿಷ್ಣುವೇ ಅಲ್ಪಸ್ಥಾನದಲ್ಲಿಯೂ ಇದ್ದಾನೆಂದು ವಿಷ್ಣುವಿನಲ್ಲಿ ಅಲ್ಪಸ್ಥಾನತ್ವವೆಂಬ ಅಲೌಕಿಕತ್ವವನ್ನು ಆಕಾಶದಂತೆ ಕೂಡಿಸಬಹುದು.

ಭೂತಪದವು ಸಕಲಭೂತಗಳಲ್ಲಿ ವಿಷ್ಣುವನ್ನು ಉಪಾಸನೆ ಮಾಡಬೇಕೆಂಬರ್ಥದಲ್ಲಿ ನಿವಿಷ್ಟವಾಗಿವೆ.

ಜೀವರಿಗೆ ಉಂಟಾಗುವ ಸುಖದುಃಖಗಳ ಭೋಗವು ವಿಷ್ಣುವಿಗೆ ಬರುವುದಿಲ್ಲ. ಏಕೆಂದರೆ ಅತಿಶಯವಾದ ಸಾಮರ್ಥ್ಯದಿಂದ ಜೀವರ ಜೊತೆಗಿದ್ದರೂ ವಿಷ್ಣುವಿಗೆ ಸುಖದುಃಖಗಳು ಬರುವುದಿಲ್ಲ. ಮತ್ತು 'ಭೂತೇಷು' ಎಂಬಲ್ಲಿ ಆದಿತ್ಯನಲ್ಲಿರುವಿಕೆಯನ್ನೂ ಸಹ ಕೂಡಿಸಬಹುದು. ಚಕ್ಷುರ್ನಿಯತತ್ವವೂ ಸಹ ವಿಷ್ಣುವಿನಲ್ಲೇ ಬರುತ್ತದೆ. ಏಕೆಂದರೆ ಚಕ್ಷುರಾದಿ ಇಂದ್ರಿಯಗಳಿಗೆ ವಿಷ್ಣುವು ಸ್ವಾಮಿಯಾಗಿದ್ದಾನೆ. ಹೀಗೆ ಯಾವುದೇ ಬಾಧಕಗಳಿಲ್ಲದ ಕಾರಣ ಸರ್ವಗತನಾದವನು ವಿಷ್ಣುವೆಂದು ನಿರ್ಣಯಿಸಬಹುದು. ಅಣುವಾದ ಜೀವನಾಗಲಿ, ಆದಿತ್ಯನಾಗಲೀ ಸರ್ವಗತರಾಗಲು ಸಾಧ್ಯವಾಗದ ಕಾರಣ ಪರಪಕ್ಷದಲ್ಲಿ ಬಾಧಕವೂ ಇರುತ್ತದೆ. ಆದ್ದರಿಂದ ಪೃಥಿವ್ಯಾದಿ ಸಕಲಭೂತಪದಾರ್ಥಗಳಲ್ಲಿರುವವನು ವಿಷ್ಣುವೇ ಆಗಿದ್ದಾನೆ.

**फलं तु भूतेष्वेतमेव आदित्यादिकमेव नान्यदित्येवकारेण विष्णोर्भूतादन्यत्रैव सत्वप्रतीत्या 'ब्रह्म ततमपश्यद्' (ऐ. १-४-३) इति पूर्वनयनिर्णयश्रुत्युक्तव्याप्तत्वाख्य-सर्वगतत्वमयुक्तमिति पूर्वाक्षेपस्तत्समाधिश्चेति ।।**

ಪೂರ್ವಪಕ್ಷ ಹಾಗೂ ಸಿದ್ಧಾಂತಗಳ ಫಲ ಹೀಗಿದೆ - 'ಭೂತೇಷು ಏತಮೇವ' ಎಂಬಲ್ಲಿ ಏವಕಾರದಿಂದ ಆದಿತ್ಯಾದಿಗಳೇ ಭೂತಪದಾರ್ಥಗಳಲ್ಲಿದ್ದಾರೆ. ಬೇರೆಯವರಿಲ್ಲ ಎಂದು ತಿಳಿಯುತ್ತದೆ. ಆದ್ದರಿಂದ ಭೂತಪದಾರ್ಥಗಳನ್ನು ಬಿಟ್ಟು ಬೇರೆಡೆ ವಿಷ್ಣುವಿದ್ದಾನೆಂದು ತಿಳಿಯುತ್ತದೆ. ಆದ್ದರಿಂದ ಹಿಂದಿನ ಅಧಿಕರಣದಲ್ಲಿ ನಿರ್ಣಯಿಸಲ್ಪಟ್ಟ 'ಬ್ರಹ್ಮ ತತಮಪಶ್ಯದ್' ಎಂಬಲ್ಲಿರುವ ವ್ಯಾಪ್ತತ್ವವೆಂಬ ಸರ್ವಗತತ್ವವು ವಿಷ್ಣುವಿನಲ್ಲಿ ಕೂಡುವುದಿಲ್ಲ. ಇದು ಪೂರ್ವಪಕ್ಷದ ಫಲ. ಇದರ ನಿರಾಕರಣೆಯೇ ಸಿದ್ಧಾಂತದ ಫಲ.

ಶ್ರೀರಾಘವೇಂದ್ರತೀರ್ಥಶ್ರೀಪಾದಂಗಳವರಿಂದ ರಚಿತವಾದ
ನ್ಯಾಯಮುಕ್ತಾವಳಿಯ ಕನ್ನಡಾನುವಾದದಲ್ಲಿ ಸರ್ವಗತತ್ವಾಧಿಕರಣವು ಸಮಾಪ್ತವಾಯಿತು.

# सूत्रार्थरत्नावलिः

लिङ्गात्मकानां शब्दानां विष्णौ प्रवृत्तिः प्रदर्श्यतेऽस्मिन् पादे प्राधान्येन
अत्रान्यत्रप्रसिद्धसर्वगतत्वरूपभावलिङ्गं ब्रह्मणि समन्वीयते

**ॐ सर्वत्रप्रसिद्धोपदेशात् ॐ ॥ (१-२-१)**

नन्वादित्य एवायं सर्वगतो भवेत् । तस्यैतस्यावासादित्य (ऐ.आ.३।२।३) इत्यादि बह्वादित्यश्रुतेः । सूर्य आत्मेति सौरमन्त्रोदाहरणाच्च । एतमस्यामेतमिति क्षित्यादिषूक्त्वादित्येऽनुक्तत्वलिङ्गाच्च । यद्वा, सर्वजीवानामेतत्सर्वगतत्वम् । चक्षुर्मयादि लिङ्गात् । नच चक्षुर्मयत्वादिलिङ्गमन्तर्यामिविषयम् । तस्यापरिच्छिन्नत्वेन सर्वेषु भूतेष्वित्युक्ताल्पौकस्त्वायोगात् । तस्माद्विष्ण्वन्यस्यैव सर्वगतत्वेन तस्यैव प्रागुक्तं प्राणत्वमानन्दमयत्वं चेति प्राप्ते सूत्रमाह ।

॥ ॐ ॥ **सर्वत्र प्रसिद्धोपदेशादिति** ॥ अस्यार्थः – 'तत्तु' इति वर्तते । सर्वत्र पृथिव्यादिषु । उच्यमानं वस्तु तत्तु नारायणाख्यं ब्रह्मैव नत्वन्यत् । कुतः ? प्रसिद्धोपदेशात् एतमेव ब्रह्मेति (ऐ.आ. ३।२।३-१२) सर्वगते वस्तुनि नारायणवाचित्वेन श्रुत्यादि-प्रसिद्धब्रह्मशब्दश्रवणादित्यर्थः ।

एवं चैतमेवेति सर्वभूतगते वस्तुनि नारायणैकनिष्ठत्वेन 'स यश्चायम्' (ऐ.आ.३।२।३) श्रुतिप्रसिद्धब्रह्मशब्दोपदेशात् सर्वेषु भूतेष्वन्तर्गततयोच्यमानो नारायण एवेति सिद्धम् ।

**ॐ विवक्षितगुणोपपत्तेश्च ॐ ॥ (१-२-२)**

युक्त्यन्तरेण विष्णोरेवात्रोक्तसर्वगतत्वं प्रतिपादयत् सूत्रमवतारयति –

॥ ॐ॥ **विवक्षितगुणोपपत्तेश्चेति** ॥ अस्यार्थः । चः समुच्चयेऽवधारणे वा । सर्वगते श्रुत्येति शेषः । ततश्च विवक्षितानाम् इतः परं सर्वगते सर्वगते श्रुत्या तन्निष्ठतया वक्तुं योग्यानां वक्ष्यमाणानां वाऽश्रुतत्वादिगुणानां विष्णोरेव योग्यत्वेन तस्मिन्नेवोपपत्तेरन्यत्रानुपपत्तेश्च विष्णुरेव सर्वगत इत्यर्थः ।

एवं च 'स योऽतोऽश्रुतः' (ऐ.आ.३।२।४), 'न ते विष्णो' (ऋ.७।९९।२) 'स सविता' (चतुर्वेदशिखायां) इत्यादिश्रुतिभिः सर्वत्रगतनिष्ठतया वक्तुं योग्यानां

वक्ष्यमाणानामश्रुतत्वादिगुणानां विष्णोरेव योग्यत्वेन सर्वत्रोच्यमानो नारायण एवेति सिद्धम् ।

**ॐ ॥ अनुपपत्तेस्तु न शारीरः ॥ ॐ (१-२-३)**

ननु यथा ब्रह्मशब्दादश्रुतत्वादिलिङ्गैश्च विष्णुः सर्वगत इत्युच्यते तथा 'आदित्यो रसः' (ऐ.आ.३।२।३) इत्यादित्यशब्दाच्चक्षुर्मय इति (ऐ.आ.३।२।१) श्रुतौ ज्ञानकरणात्मक-देहाभिमानित्वेन जीवे प्रसिद्धचक्षुर्मयत्वादिलिङ्गैश्चादित्यः सर्वजीवा वा भवेयुरिति प्राप्ते सूचितम् –

**ॐ ।। अनुपपत्तेस्तु न शारीर इति ।।** अस्यार्थः । तु शब्द एवार्थे । शारीरः जीवः । आदित्यो वा । न सर्वगतः । कुतः? अनुपपत्तेः एकस्य जीवस्य सर्वशरीरस्थत्वायोगादेवेत्यर्थः ।

एवं च सर्वजीवस्य समानभोगरूपोपपत्तिविरुद्धत्वात् । एकैकस्य जीवस्य सर्वशरीरस्थत्वानुपपत्तेः । एकस्य जीवस्यादित्यस्य वा सर्वशरीरस्थत्वे सर्वसुखदुःखादिभोगप्राप्त्या सर्वगतत्वायोगेन श्रुतेर्बाधितविषयत्वप्रसङ्गात् । तस्मात् सर्वभूतेष्वन्तर्गततयोच्यमानो नारायण एवेति सिद्धम् ।

**ॐ ॥ कर्मकर्तृव्यपदेशाच्च ॥ ॐ (१-२-४)**

युक्त्यन्तरेण शारीरस्य सर्वगतत्वं पराकुर्वत् सूत्रमुपन्यस्यति –

**ॐ ।। कर्मकर्तृव्यपदेशाच्चेति ।।** अस्यार्थः – सर्वगते वस्तुनि 'आत्मानम्' इति (ऐ.आ.३।२।३) कर्मत्वस्य जीवे च शंसतीति तद्विरुद्धकर्तृत्वस्य व्यपदेशात् उक्तत्वाच्च न जीवः सर्वगत इत्यर्थः ।

एवं च सर्वत्रोक्तस्य सर्वगतस्य प्रकृतस्यैतमात्मानामित्यैतरेयश्रुतौ शंसनक्रियायां स एतमात्मानमिति कर्मत्वेन शारीरस्य च तस्यामेव कर्तृत्वेन व्यपदेशात् । एकस्यां क्रियायां तयोरुत्सर्गतो भिन्नत्वनियमादपवादकारणाभावाच्च सर्वत्रोच्यमानो विष्णुरेवेति सिद्धम् ।।

**ॐ ॥ शब्दविशेषात् ॥ ॐ (१-२-५)**

ननु ब्रह्मशब्दाद् विष्णुरेव सर्वगत इति न युज्यते । तच्छब्दस्य जीवेऽपि वृत्तेः । न चासौ जीवेऽमुख्य इति तदग्रहः । चक्षुर्मयत्वादिबाधकबलेनामुख्यार्थस्यापि

ग्रहणोपपत्तेः । न चाश्रुतत्वादिगुणशून्यरूपबाधकेन न जीवः । श्रुत्वाप्येनम् इति गीतायां जीवस्याद्भुतत्वादिश्रवणात् । नाप्येकशरीरस्थत्वानुपपत्तिर्बाधिका । तस्या विष्णावपि साम्यात् । न च चक्षुर्मयत्वादिबाधकान्न जीवः । एकस्यैव कर्मकर्तृत्वयोरुपपत्तेः । ततश्च सर्वगतो जीव एवेति प्राप्ते, सूचितम् –

ॐ ।। **शब्दविशेषादिति** ।। **अस्यार्थः** । 'एतमेव ब्रह्म' इति (ऐ.आ.३।२।३) वाक्ये ब्रह्मशब्दस्यावधारणार्थक एवशब्दाख्यविशेषणवत्त्वात् । ब्रह्मशब्दो न जीवपर इत्यर्थः ।

एवं च निर्दिष्टवाक्ये हेतुत्वेन प्रकृतब्रह्मशब्दस्य सावधारणत्वरूप-विशेषवत्त्वात् । एवकारशिरस्क ब्रह्मशब्दवाच्यत्वे जीवस्य मुख्यब्रह्मत्वप्राप्तं स्यात् । अतः सर्वगतो विष्णुरेवेति सिद्धम् ।

**ॐ ॥ स्मृतेश्च ॥ ॐ**

श्रुतिसमाख्ययाऽपि विष्णोः सर्वगतत्वं साधयत् सूत्रमुपन्यस्यति –

ॐ।। **स्मृतेश्चेति** ।। **अस्यार्थः** – चः समुच्चये । न केवलं श्रुत्युक्तत्वात् ब्रह्मशब्दो न जीवपर इति । किन्तु 'अहमात्मा गुडाकेश' (भ.गी.१०।२०) इत्यादिस्मृतिसद्भावाच्च ब्रह्मशब्दो न जीवपर इत्यर्थः ।।

एवं च निर्दिष्टस्मृतिवाक्यात् । जीवेशयोर्भेदमिथ्यात्वकल्पनस्य सूत्रकृताऽविवक्षितत्वात् । 'द्वा सुपर्णा' इत्यादि (मुं.उ.३।१।१) प्रमाणविरुद्धत्वेन च तथा न कल्पनीयत्वात् सर्वगतो विष्णुरेवेति सिद्धम् ।।

**ॐ ॥ अर्भकौकस्त्वात् तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ ॐ**

ननु सर्वेषु भूतेष्वित्यल्पस्थाने साकल्येन स्थितिकथनात् । जीवधर्मव्यपदेशाच्च । सर्वगतो जीव एव न विष्णुः अपरिच्छिन्ने जीवधर्मरहिते च तस्मिंस्तदुभयव्यपदेशायोगादिति प्राप्ते समादधत् सूत्रमुपन्यस्यति –

ॐ ।। **अर्भकौकस्त्वात् तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्चेति** ।। अस्यार्थः – 'अर्भकौकस्त्वात् सर्वेषु भूतेषु' इति (ऐ.आ.३।२।३) सर्वगतवस्तुनः सर्वप्राणिहृदयाकाशरूपाल्पस्थानकत्वकथनात् । तद्व्यपदेशात् तस्य जीवस्य तच्छ्रुतिलिङ्गादिना व्यपदेशात् उक्तत्वाच्च । नेति चेत् ब्रह्मैव

वक्ष्यमाणानामश्रुतत्वादिगुणानां विष्णोरेव योग्यत्वेन सर्वत्रोच्यमानो नारायण एवेति सिद्धम् ।

**ॐ ॥ अनुपपत्तेस्तु न शारीरः ॥ ॐ (१-२-३)**

ननु यथा ब्रह्मशब्दादश्रुतत्वादिलिङ्गैश्च विष्णुः सर्वगत इत्युच्यते तथा 'आदित्यो रसः' (ऐ.आ.३।२।३) इत्यादित्यशब्दाच्चक्षुर्मय इति (ऐ.आ.३।२।१) श्रुतौ ज्ञानकरणात्मक-देहाभिमानित्वेन जीवे प्रसिद्धचक्षुर्मयत्वादिलिङ्गैश्चादित्यः सर्वजीवा वा भवेयुरिति प्राप्ते सूचितम् –

**ॐ ।। अनुपपत्तेस्तु न शारीर इति ।।** अस्यार्थः । तु शब्द एवार्थे । शारीरः जीवः । आदित्यो वा । न सर्वगतः । कुतः? अनुपपत्तेः एकस्य जीवस्य सर्वशरीरस्थत्वायोगादेवेत्यर्थः ।

एवं च सर्वजीवस्य समानभोगरूपोपपत्तिविरुद्धत्वात् । एकैकस्य जीवस्य सर्वशरीरस्थत्वानुपपत्तेः । एकस्य जीवस्यादित्यस्य वा सर्वशरीरस्थत्वे सर्वसुखदुःखादिभोगप्राप्त्या सर्वगतत्वायोगेन श्रुतेर्बाधितविषयत्वप्रसङ्गात् । तस्मात् सर्वभूतेष्वन्तर्गततयोच्यमानो नारायण एवेति सिद्धम् ।

**ॐ ॥ कर्मकर्तृव्यपदेशाच्च ॥ ॐ (१-२-४)**

युक्त्यन्तरेण शारीरस्य सर्वगतत्वं पराकुर्वत् सूत्रमुपन्यस्यति –

**ॐ ।। कर्मकर्तृव्यपदेशाच्चेति ।।** अस्यार्थः – सर्वगते वस्तुनि 'आत्मानम्' इति (ऐ.आ.३।२।३) कर्मत्वस्य जीवे च शंसतीति तद्विरुद्धकर्तृत्वस्य व्यपदेशात् उक्तत्वाच्च न जीवः सर्वगत इत्यर्थः ।

एवं च सर्वत्रोक्तस्य सर्वगतस्य प्रकृतस्यैतमात्मानामित्यैतरेयश्रुतौ शंसनक्रियायां स एतमात्मानमिति कर्मत्वेन शारीरस्य च तस्यामेव कर्तृत्वेन व्यपदेशात् । एकस्यां क्रियायां तयोरुत्सर्गतो भिन्नत्वनियमादपवादकारणाभावाच्च सर्वत्रोच्यमानो विष्णुरेवेति सिद्धम् ।।

**ॐ ॥ शब्दविशेषात् ॥ ॐ (१-२-५)**

ननु ब्रह्मशब्दाद् विष्णुरेव सर्वगत इति न युज्यते । तच्छब्दस्य जीवेऽपि वृत्तेः । न चासौ जीवेऽमुख्य इति तदग्रहः । चक्षुर्मयत्वादिबाधकबलेनामुख्यार्थस्यापि

ग्रहणोपपत्तेः । न चाश्रुतत्वादिगुणशून्यरूपबाधकेन न जीवः । श्रुत्वाप्येनम् इति गीतायां जीवस्याद्भुतत्वादिश्रवणात् । नाप्येकशरीरस्थत्वानुपपत्तिर्बाधिका । तस्या विष्णावपि साम्यात् । न च चक्षुर्मयत्वादिबाधकान्न जीवः । एकस्यैव कर्मकर्तृत्वयोरुपपत्तेः । ततश्च सर्वगतो जीव एवेति प्राप्ते, सूचितम् –

ॐ ।। **शब्दविशेषादिति** ।। अस्यार्थः । 'एतमेव ब्रह्म' इति (ऐ.आ.३।२।३) वाक्ये ब्रह्मशब्दस्यावधारणार्थक एवशब्दाख्यविशेषणवत्त्वात् । ब्रह्मशब्दो न जीवपर इत्यर्थः ।

एवं च निर्दिष्टवाक्ये हेतुत्वेन प्रकृतब्रह्मशब्दस्य सावधारणत्वरूप-विशेषवत्त्वात् । एवकारशिरस्क ब्रह्मशब्दवाच्यत्वे जीवस्य मुख्यब्रह्मत्वप्राप्तं स्यात् । अतः सर्वगतो विष्णुरेवेति सिद्धम् ।

**ॐ ॥ स्मृतेश्च ॥ ॐ**

श्रुतिसमाख्ययाऽपि विष्णोः सर्वगतत्वं साधयत् सूत्रमुपन्यस्यति –

ॐ।। **स्मृतेश्चेति** ।। अस्यार्थः – चः समुच्चये । न केवलं श्रुत्युक्तत्वात् ब्रह्मशब्दो न जीवपर इति । किन्तु 'अहमात्मा गुडाकेश' (भ.गी.१०।२०) इत्यादिस्मृतिसद्भावाच्च ब्रह्मशब्दो न जीवपर इत्यर्थः ।।

एवं च निर्दिष्टस्मृतिवाक्यात् । जीवेशयोर्भेदमिथ्यात्वकल्पनस्य सूत्रकृताऽविवक्षितत्वात् । 'द्वा सुपर्णा' इत्यादि (मुं.उ.३।१।१) प्रमाणविरुद्धत्वेन च तथा न कल्पनीयत्वात् सर्वगतो विष्णुरेवेति सिद्धम् ।।

**ॐ ॥ अर्भकौकस्त्वात् तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ ॐ**

ननु सर्वेषु भूतेष्वित्यल्पस्थाने साकल्येन स्थितिकथनात् । जीवधर्मव्यपदेशाच्च । सर्वगतो जीव एव न विष्णुः अपरिच्छिन्ने जीवधर्मरहिते च तस्मिंस्तदुभयव्यपदेशायोगादिति प्राप्ते समादधत् सूत्रमुपन्यस्यति –

ॐ ।। **अर्भकौकस्त्वात् तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्चेति** ।। अस्यार्थः – 'अर्भकौकस्त्वात् सर्वेषु भूतेषु' इति (ऐ.आ.३।२।३) सर्वगतवस्तुनः सर्वप्राणिहृदयाकाशरूपाल्पस्थानकत्वकथनात् । तद्व्यपदेशात् तस्य जीवस्य तच्छ्रुतिलिङ्गादिना व्यपदेशात् उक्तत्वाच्च । नेति चेत् ब्रह्मैव

सर्वगतम् इत्युक्तं नेति चेत्, न । कुतः? तेषां विष्णावेवोपपत्तेरिति शेषः । नच वैय्यर्थ्यम् । एवं निचाय्यत्वात् एवमर्भकौकस्त्वादिरूपेण विष्णोरेवोपास्यत्वात् । तथा च न वैय्यर्थ्यमिति भावः । श्रुतिलिङ्गादीनां ब्रह्मपरत्वेन न तद्विरोध इति भावः । व्याप्तस्य विष्णोः कथमल्पस्थानस्थितिरित्यत उक्तम् – **व्योमवच्चेति** ।। यथाऽऽकाशस्य व्याप्तस्यापि गृहाद्येकदेशावस्थितिः तद्वद् विष्णोरपीत्यर्थः ।।

एवं चापरिच्छिन्नादिरूपस्यार्भकौकस्त्वादिकथनमप्रयोजनम् । उतायुक्तम् । नाद्यः । तस्य तेन रूपेणोपास्यत्वेन व्यपदेशस्य सप्रयोजनत्वात् । न द्वितीयः । सर्वगतस्यापि व्योम्नोऽंशस्य साकल्येनाल्पौकस्त्वदर्शनेन तदभेदादाकाशस्याल्पौकस्त्ववद् भगवतः साकल्येनाल्पौकस्त्वोपपत्तेः । ईश्वरस्य सर्वेन्द्रियस्वामित्वेन चक्षुर्मयत्वादेरप्युपपत्तेः । न चादित्येऽनुक्तत्वलिङ्गविरोधः । 'यश्चासावादित्य' इति पूर्ववाक्ये आदित्यस्थत्वस्योक्तत्वेनानुक्तत्वस्यासिद्धत्वात् । अतः सर्वगतो विष्णुरेवेति सिद्धम् ।

**ॐ ।। सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ।। ॐ (१-२-८)**

पुनरुक्तमाक्षिप्य समादधत् सूत्रमाह –

**ॐ ।। सम्भोगप्राप्तिरिति चेन्न वैशेष्यादिति ।।** अस्यार्थः – यतो ब्रह्मणः व्योमवत् सर्वजीवशरीरस्थत्वे सम्भोगप्राप्तिः समानभोगप्राप्तिरित्यतो बाधकान्न ब्रह्म सर्वगतमिति चेन्न । कुतः? वैशेष्यात् विष्णोः सामर्थ्यविशेषवत्त्वादित्यर्थः । तथा च न तस्य जीवसमानभोगप्राप्तिरिति भावः ।

एवं च सर्वज्ञताऽल्पज्ञता भेदात् । सामर्थ्यवैशेष्याच्चाग्निस्तम्भनवतो दाहाभाववत् समानभोगाप्राप्तेः सर्वगतो विष्णुरेवेति सिद्धम् ।।

।। इति सूत्रार्थरत्नावळ्यां सर्वगतत्वाधिकरणम् ।।

।। ಪರಿಪೂರ್ಣಚಂದ್ರಿಕೆಯಲ್ಲಿ ಸರ್ವಗತತ್ವಾಧಿಕರಣವು ಮುಗಿಯಿತು ।।

।। ಶ್ರೀಮದ್ವೇಶಾರ್ಪಣಮಸ್ತು ।।

# ೦೩-ಅತ್ಯತ್ವಾಧಿಕರಣ

## ಭಾಗ -೧

ಬ್ರಹ್ಮಸೂತ್ರ, ಸೂತ್ರದೀಪಿಕಾ, ಬ್ರಹ್ಮಸೂತ್ರಭಾಷ್ಯ, ಭಾಷ್ಯದೀಪಿಕಾ,
ಸತ್ತರ್ಕದೀಪಾವಳಿ, ತತ್ವಪ್ರಕಾಶಿಕಾ,
ಭಾವದೀಪ, ವಾಕ್ಯಾರ್ಥಮಂಜರೀ

सर्वगतम् इत्युक्तं नेति चेत्, न । कुतः? तेषां विष्णावेवोपपत्तेरिति शेषः । नच वैय्यर्थ्यम् । एवं निचाय्यत्वात् एवमर्भकौकस्त्वादिरूपेण विष्णोरेवोपास्यत्वात् । तथा च न वैय्यर्थ्यमिति भावः । श्रुतिलिङ्गादीनां ब्रह्मपरत्वेन न तद्विरोध इति भावः । व्याप्तस्य विष्णोः कथमल्पस्थानस्थितिरित्यत उक्तम् – **व्योमवच्चेति** ।। यथाऽऽकाशस्य व्याप्तस्यापि गृहाद्येकदेशावस्थितिः तद्वद् विष्णोरपीत्यर्थः ।।

एवं चापरिच्छिन्नादिरूपस्यार्भकौकस्त्वादिकथनमप्रयोजनम् । उतायुक्तम् । नाद्यः । तस्य तेन रूपेणोपास्यत्वेन व्यपदेशस्य सप्रयोजनत्वात् । न द्वितीयः । सर्वगतस्यापि व्योम्नोऽंशस्य साकल्येनाल्पौकस्त्वदर्शनेन तदभेदादाकाशस्याल्पौकस्त्ववद् भगवतः साकल्येनाल्पौकस्त्वोपपत्तेः । ईश्वरस्य सर्वेन्द्रियस्वामित्वेन चक्षुर्मयत्वादेरप्युपपत्तेः । न चादित्येऽनुक्तत्वलिङ्गविरोधः । 'यश्चासावादित्य' इति पूर्ववाक्ये आदित्यस्थत्वस्योक्तत्वेनानुक्तत्वस्यासिद्धत्वात् । अतः सर्वगतो विष्णुरेवेति सिद्धम् ।

**ॐ ।। सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ।। ॐ (१-२-८)**

पुनरुक्तमाक्षिप्य समादधत् सूत्रमाह –

ॐ ।। **सम्भोगप्राप्तिरिति चेन्न वैशेष्यादिति** ।। अस्यार्थः – यतो ब्रह्मणः व्योमवत् सर्वजीवशरीरस्थत्वे सम्भोगप्राप्तिः समानभोगप्राप्तिरित्यतो बाधकान्न ब्रह्म सर्वगतमिति चेन्न । कुतः? वैशेष्यात् विष्णोः सामर्थ्यविशेषवत्त्वादित्यर्थः । तथा च न तस्य जीवसमानभोगप्राप्तिरिति भावः ।

एवं च सर्वज्ञताऽल्पज्ञता भेदात् । सामर्थ्यवैशेष्याच्चाग्निस्तम्भनवतो दाहाभाववत् समानभोगाप्राप्तेः सर्वगतो विष्णुरेवेति सिद्धम् ।।

।। इति सूत्रार्थरत्नावळ्यां सर्वगतत्वाधिकरणम् ।।

।। ಪರಿಪೂರ್ಣಚಂದ್ರಿಕೆಯಲ್ಲಿ ಸರ್ವಗತತ್ವಾಧಿಕರಣವು ಮುಗಿಯಿತು ।।

।। ಶ್ರೀಮದ್ವೇಶಾರ್ಪಣಮಸ್ತು ।।

# ೦೩-ಅತ್ಯತ್ವಾಧಿಕರಣ

## ಭಾಗ -೧

ಬ್ರಹ್ಮಸೂತ್ರ, ಸೂತ್ರದೀಪಿಕಾ, ಬ್ರಹ್ಮಸೂತ್ರಭಾಷ್ಯ, ಭಾಷ್ಯದೀಪಿಕಾ,
ಸತ್ತರ್ಕದೀಪಾವಳಿ, ತತ್ವಪ್ರಕಾಶಿಕಾ,
ಭಾವದೀಪ, ವಾಕ್ಯಾರ್ಥಮಂಜರೀ

॥ ಶ್ರೀಗುರುಭ್ಯೋ ನಮಃ ॥

ದೇವದೇವೋತ್ತಮ ದೇವತಾಸಾರ್ವಭೌಮ

ಅಖಿಲಾಂಡಕೋಟಿಬ್ರಹ್ಮಾಂಡನಾಯಕ,ಚತುರ್ದಶಲೋಕಗುರುಗಳಾದ

ಶ್ರೀವೇದವ್ಯಾಸದೇವರಿಂದ ಅನುಗ್ರಹಿಸಲ್ಪಟ್ಟ

ಬ್ರಹ್ಮಮೀಮಾಂಸಾಶಾಸ್ತ್ರ

# ಅತ್ತೃತ್ವಾಧಿಕರಣ

## ಸಕಲಸಂಹಾರಕನಾದ ವಿಷ್ಣುವೇ ಎಲ್ಲವನ್ನು ತಿನ್ನುತ್ತಾನೆ

**ॐ अत्ता चराचरग्रहणात् ॐ ॥ १-२-९ ॥**

ಅನುವಾದ - 'ಸರ್ವಂ ವಾ ಅತ್ತಿ' ಎಂಬ ಬೃಹದಾರಣ್ಯಕೋಪನಿಷತ್ತಿನಲ್ಲಿ ಪ್ರತಿಪಾದಿಸಲ್ಪಟ್ಟ ಸಂಹಾರಕರ್ತೃ ಬ್ರಹ್ಮನೇ ಹೊರತು ಅದಿತಿ ದೇವಿಯಲ್ಲ. ಏಕೆಂದರೆ ''ಸರ್ವಂ ವಾ ಅತ್ತಿ'' ಎಂಬುದಾಗಿ ಚರಾಚರಪ್ರಪಂಚವನ್ನು ಸಂಹಾರ್ಯವೆಂದು ಹೇಳಲ್ಪಟ್ಟಿರುವುದರಿಂದ.

॥ಶ್ರೀವೇದವ್ಯಾಸದೇವರಿಂದ ರಚಿಸಲ್ಪಟ್ಟ ಬ್ರಹ್ಮಮೀಮಾಂಸಾಶಾಸ್ತ್ರದಲ್ಲಿ

ಅತ್ತೃತ್ವಾಧಿಕರಣವು ಸಮಾಪ್ತವಾಯಿತು ॥

ಶ್ರೀಜಗನ್ನಾಥಯತಿಗಳಿಂದ ರಚಿಸಲ್ಪಟ್ಟ

## ಸೂತ್ರದೀಪಿಕಾ

**सूत्रदीपिका** – अत्ता ''सर्वं वा अत्ति'' इत्युक्तसर्वात्ता विष्णुरेव न त्वदितिः । कुतः? चराचरग्रहणात् चराचरस्य चेतनाचेतनात्मकप्रपञ्चस्य ''सर्वम्'' इति श्रुतौ अद्यतयोक्तत्वत् इत्यर्थः ॥१ ॥

ಪರಿಪೂರ್ಣಚಂದ್ರಿಕಾ

ಅತ್ತ = 'ಸರ್ವಂ ವಾ ಅತ್ತಿ' ಎಂಬ ಬೃಹದಾರಣ್ಯಕದಲ್ಲಿ ಹೇಳಲ್ಪಟ್ಟ ಸಂಹಾರಕರ್ತೃ ವಿಷ್ಣುವೇ ಆಗಿದ್ದಾನೆ ಹೊರತು ಅದಿತಿದೇವಿಯಲ್ಲ. ಏಕೆಂದರೆ ಚರಾಚರಗ್ರಹಣಾತ್ = ಚೇತನಾಚೇತನಾತ್ಮಕವಾದ ಪ್ರಂಪಚಕ್ಕೆ 'ಸರ್ವಂ' ಎಂಬ ಶ್ರುತಿಯು ಸಂಹಾರ್ಯತ್ವವನ್ನು ಹೇಳುತ್ತಿರುವುದರಿಂದ.

॥ ಸೂತ್ರದೀಪಿಕೆಯಲ್ಲಿ ಅತ್ತೃತ್ವಾಧಿಕರಣವು ಸಮಾಪ್ತವಾಯಿತು ॥

## श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचित-

# ब्रह्मसूत्रभाष्यम्

## ।। अथ अत्तृत्वाधिकरणम् ।।

**भाष्यम् – 'जन्माद्यस्य यतः' (१-१-२.) इत्युक्तम् ।**
**तत्रात्तृत्वं 'स यद्यदेवासृजत तत्तदत्तुमध्रियत । सर्वं वा अत्तीति तददितेरादितित्वम्' (बृ. उ-३-२५) इत्यदितेः प्रतीयते ।**

**ಅನುವಾದ - 'ಜನ್ಮಾದ್ಯಸ್ಯ ಯತಃ ' ಎಂಬ ಎರಡನೆಯ ಸೂತ್ರದಲ್ಲಿ ಬ್ರಹ್ಮನೇ ಸಕಲ ಜಗತ್ತಿನ ಸೃಷ್ಟ್ಯಾದಿಗಳಿಗೆ ಕಾರಣನೆಂದು ಹೇಳಲಾಗಿದೆ. ಸೃಷ್ಟ್ಯಾಗಳಲ್ಲಿ ಸೇರಿರುವ ಸಂಹಾರಕರ್ತೃತ್ವವು 'ಸ ಯದ್ಯದೇವ' ಎಂಬ ಬೃಹದಾರಣ್ಯಕದಲ್ಲಿ ಅದಿತಿಯ ಕಾರ್ಯವೆಂದು ಹೇಳಲಾಗಿದೆ.**

ಪ್ರತಿಪದಾರ್ಥ - ಈ ಅಧಿಕರಣದಲ್ಲಿ ಲೋಕತಃ ಅನ್ಯತ್ರಪ್ರಸಿದ್ಧವಾದ ಅದಿತಿ ಶಬ್ದದಿಂದ ಅತ್ತೃತ್ವವೆಂಬ ಲಿಂಗದ ಸಮನ್ವಯವನ್ನು ಶ್ರೀಹರಿಯಲ್ಲಿ ಮಾಡುತ್ತಿದ್ದಾರೆ.

''ಜನ್ಮಾದ್ಯಸ್ಯ ಯತಃ'' ಇತ್ಯುಕ್ತಮ್ = ಎರಡನೆಯ ಸೂತ್ರದಲ್ಲಿ ಸೃಷ್ಟ್ಯಾದ್ಯಷ್ಟಕಗಳು ಯಾರಿಂದ ನಡೆಯುತ್ತವೆಯೋ ಅವನೇ ಬ್ರಹ್ಮನಾಗಿದ್ದಾನೆಂದು ಹೇಳಲಾಗಿದೆ. ತತ್ರ = ಆ ಬೃಹದಾರಣ್ಯಕಶ್ರುತಿಯಲ್ಲಿ, ಅತ್ತೃತ್ವಂ = ಸಂಹಾರಕತ್ವವು, ಸಃ ಯದ್ಯದೇವಾಸೃಜತ = ಏನೇನು ಪದಾರ್ಥಗಳನ್ನು ತಾನು ಸೃಷ್ಟಿಮಾಡಿದ್ದಾನೋ, ತತ್ತದತ್ತುಂ = ಆ ಎಲ್ಲಾ ಪದಾರ್ಥವನ್ನು, ಅತ್ತುಂ = ತಿನ್ನುವುದಕ್ಕಾಗಿ, ಅಧ್ರಿಯತ = ಮನಸ್ಸನ್ನು ಮಾಡಿದನು. ಸರ್ವಂ ವಾ = ಎಲ್ಲವನ್ನು, ಅತ್ತೀತಿ = ತಿನ್ನುವ ಕಾರಣದಿಂದ, ತತ್ = ಅದು, ಅದಿತೇಃ = ಕಶ್ಯಪರ ಹೆಂಡತಿಯಾದ ಅದಿತಿಗೆ, ಅದಿತಿತ್ವಂ = ಅದಿತಿಪದಪ್ರತಿಪಾದ್ಯತ್ವವು, ಯುಕ್ತವಾಗುತ್ತದೆ. ಇತಿ = ಈ ರೀತಿಯಾಗಿ, ಅದಿತೇಃ = ದೇವಮಾತೆಯಾದ ಅದಿತಿಗೆ ಪ್ರತೀಯತೇ = ಅತ್ತೃತ್ವವು ತೋರುತ್ತದೆ.[१]

---

(१) भाष्यदीपिका – अत्राधिकरणे लोकतोऽन्यत्रप्रसिद्धादितिशब्देन सहोक्तात्तृत्वलिङ्गस्य हरौ समन्वयः क्रियते । श्रुत्यादिसङ्गतिं विषयवाक्यमुदाहृत्य विषयसंशयौ सयुक्तिकपूर्वपक्षं

च सूचयति – जन्मेति ।। जन्मादिसूत्रे जन्मादिकर्तृत्वं विष्णोरुक्तमित्यर्थः । तत्रेति ।। उक्तलक्षणेषु मध्य इत्यर्थः । प्रविष्टमिति शेषः । अत्तृत्वमिति ।।
'स सर्गकाले च करोति सर्वं संहारकाले तु तदत्ति भूयः ।',
'स्रष्टा पाता तथैवात्ता' (स्कान्दे)
इत्यादावदिधातुप्रकृतिकानेकशब्दवाच्यं संहर्तृत्वापरपर्यायशब्दबोध्यम् ऊर्णनाभ्यादिवद्यदत्तृत्वंतदित्यर्थः । अनेन अदेर्भक्षणार्थत्वाददितेरत्तृत्वेऽपि न संहर्तृत्वलक्षणस्यातिव्याप्तिरिति शङ्का निरस्ता । प्रथमेतिशब्दः श्रुतिगतः । द्वितीयस्तु भाष्यकारीयः । अदितेरित्यावर्तते । तत्रैकं भावप्रधानम् । तथा च, इति बृहदारण्यकवाक्ये यदत्तृत्वं प्रतीयते तद् अदितेः, देवमातुरेव भवेत् । कुतः ? 'अदितेः' अदितिश्रुतेः । तथा अदितित्वलिङ्गाच्चेति योजना । अदितित्वं च गोत्वादिवददितिमात्रधर्मः, न विष्णौ सावकाशम् ।।
अनेन जन्मादिसूत्रोक्तलक्षणस्यातिव्याप्त्यसम्भवाक्षेपात् तेनास्याऽऽक्षेपिकी सङ्गतिः । श्रुत्युक्तमत्तृत्वं विषयः ।
विष्णोरन्यस्य वेति सन्देहः । देवमातुरदितेरेवेति पूर्वः पक्षः । अदितिश्रुतिरदितित्वयुक्तिश्च सूचिता भवति ।।
पूर्वपक्षे श्रुत्यर्थस्तु – 'सः' अदितिर्देवमाता संवत्सरनाम्ना चतुर्मुखेन 'यद्यदसृजत तत्तदत्तुमध्रियत' मनः । आदच्चेति शेषः । कुतः सर्वात्तृत्वमदितेः ? यस्मात् सर्वात्री सा सर्वमत्तीति यत् तदेव ह्यदितेर्देवमातुः 'अदितित्वम्' अदितिशब्दवाच्यत्वे निमित्तम्, अन्यथा तन्न स्यादिति । अस्मिन् पक्षेऽपि स्थलान्तरस्थादितिशब्दस्य निर्वचनमिदम् । अत्र सर्वशब्दः सुधारीत्या अदित्यदनयोग्यसर्वपरः । टीकारीत्या सङ्कुचितसर्वपरो वा ।।
सिद्धान्ते श्रुत्यर्थस्तु - 'सः' संवत्सरनामकचतुर्मुखो 'यद्यदेवासृजत तत्तत्सर्वमत्तुं' स मृत्युनामा जनार्दनोऽध्रियत । आदच्च । कुतः सर्वसंहर्तृत्वं विष्णोः ? 'अदितेः' अदितिशब्दात् । अदितिर्हि 'इदं सर्वं......यदिदं किञ्च' (तै.उ.२-६) 'अदितिर्देवतामयी' (कठ. ४-७) इति श्रुत्यन्तरे ब्रह्मण्यदितिशब्दप्रयोगादिति यावत् । तावताऽपि कुतः सर्वात्तृत्वं विष्णोः ? सर्वमत्तीति यत् तदेव हि 'अदितेः' स्त्रीलिङ्गादितिशब्दवाच्यस्य 'अदितित्वम्' अदितिशब्दवाच्यत्वमन्यथा स निर्निमित्तकः स्यादिति भावः । अनेन विष्णोः सर्वात्तृतायां तन्निमित्तश्रुत्यन्तरगतादितिशब्दो हेतुरित्युक्तं भवति । उक्तं हि चन्द्रिकायाम् । 'तत्तदत्तुमिति पूर्वप्रतिज्ञातसर्वात्तृतायां श्रुत्यन्तरे ब्रह्मणि प्रयुक्तस्य सर्वात्तृत्वनिमित्तकस्यादितिशब्दस्य हेतूकरणं सम्भवति' इति । अत एव ऋग्भाष्ये 'अत्ति विश्वं तेन चैवादितिरिति विष्णुः' इत्युक्तम् । तत्रैव 'गुणतः कालतश्चाऽनन्त्यरूपमखण्डित

भाष्यम् –'स यद्यदेवासृजत' इति पुलिङ्गं च 'कूटस्थोऽक्षर उच्यते' (भ.गी. १५-१६) इत्यादिवत् ।

ಅನುವಾದ - ದೇವತೆಗಳ ತಾಯಿಯಾದ ಅದಿತಿಯು ಸ್ತ್ರೀಯಾದರೂ ಸಹ ಉಪನಿಷತ್ತಿನಲ್ಲಿ 'ಸಃ' ಎಂಬುದಾಗಿ ಪುಲ್ಲಿಂಗ ಪ್ರಯೋಗವನ್ನು ಮಾಡಲಾಗಿದೆ. ಇದು ತಪ್ಪಲ್ಲ ಲಕ್ಷ್ಮೀದೇವಿಯಲ್ಲಿ "ಕೂಟಸ್ಥಃ ಅಕ್ಷರಃ" ಎಂದು ಪುಂಲ್ಲಿಂಗವನ್ನು ಪ್ರಯೋಗಿಸಿದಂತೆ ಅದ್ಭುತವಾದ ಸಾಮರ್ಥ್ಯವಿರುವುದರಿಂದ ಅದಿತಿಯಲ್ಲಿಯೂ ಪುಲ್ಲಿಂಗಪ್ರಯೋಗವು ಯುಕ್ತವಾಗುತ್ತದೆ.

ಪ್ರತಿಪದಾರ್ಥ - ಮತ್ತು ಸಃ = ಅವನು, ಯದ್ಯದೇವಾಸೃಜತ = ಏನೇನು ಸೃಷ್ಟಿ ಮಾಡಲು ಬಯಸಿದನೊ, ಇತಿ = ಹೀಗೆ ಹೇಳುವ ಶ್ರುತಿಯಲ್ಲಿ ಪುಲ್ಲಿಂಗಂ ಚ = ಪುಲ್ಲಿಂಗ ಶಬ್ದಪ್ರತಿಪಾದ್ಯತ್ವವೂ ಸಹ, ಕೂಟಸ್ಥೋಽಕ್ಷರ ಉಚ್ಯತೇ = ನಿರ್ವಿಕಾರಳಾದ ಲಕ್ಷ್ಮೀದೇವಿಯು ಅಕ್ಷರ ಎನಿಸಿದ್ದಾಳೆ ಎಂಬಲ್ಲಿ, ಇತ್ಯಾದಿವತ್ = ಹೇಗೆ ಲಕ್ಷ್ಮೀದೇವಿಯಲ್ಲಿ ಪುಲ್ಲಿಂಗ ಪ್ರಯೋಗವು ಹೇಳಲ್ಪಟ್ಟದೆಯೋ ಅದರಂತೆ ಇಲ್ಲಿಯೂ ಸಹ ಅದಿತಿ ದೇವಿಗೆ ಪುಲ್ಲಿಂಗಶಬ್ದಪ್ರಯೋಗವು ಯುಕ್ತವಾಗುತ್ತದೆ. ಆದ್ದರಿಂದ ಅದಿತಿದೇವಿಯೇ 'ಅತ್ತೃ' ಎನಿಸಿದ್ದಾಳೆ.(१)

भाष्यम् – अत्रोच्यते

सू – ॐ ॥ अत्ता चराचरग्रहणात् ॥ ॐ ॥९॥

ಅನುವಾದ - ಈ ರೀತಿಯಾದ ಪೂರ್ವಪಕ್ಷಕ್ಕೆ ಸೂತ್ರಕಾರರು ಸಮಾಧಾನವನ್ನು ನೀಡುತ್ತಿದ್ದಾರೆ.

---

त्वं चादितिशब्दप्रवृत्तिनिमित्तम्' इति चोक्तम् ॥

(१) भाष्यदीपिका – नन्वेतदत्तृत्वमदितेश्चेत् कथं तर्हि तस्यां स इति पुलिङ्गं युक्तं स्यात् । अतस्तेन श्रुत्यादिबाध इत्यत आह – स इति ॥ इति वाक्ये श्रुतमित्यर्थः । इत्यादिवदित्यनन्तरमदित्यां युज्यत इति शेषः । चस्त्वर्थः । आदिपदेन 'सोऽहं वायुं दिशां वत्सं वेद' इति छन्दोगवाक्यं गृह्यते । तथा च पूर्वपक्षे न पुलिङ्गानुपपत्तिरिति भावः । कूटमाकाशं तद्वन्निर्विकारतया तिष्ठतीति कूटस्थः । प्रकृतिः 'अक्षरः' देहतोऽविनाशित्वादुच्यत इति गीतावाक्यस्यार्थः । दिक्शब्दितानां पूर्वादिचतुर्दिगवस्थितभगवद्बाहूनां 'वत्सं' ततो जातं 'वायुं' मुख्यप्राणमहं 'वेद' जानामीत्यर्थः । लक्ष्मीवाक्यमेतत् ॥

ಪ್ರತಿಪದಾರ್ಥ - ಅತ್ರೋಚ್ಯತೇ = ಈ ವಿಷಯದಲ್ಲಿ ಸೂತ್ರಕಾರರು ಸಮಾಧಾನವನ್ನು ಹೇಳುತ್ತಿದ್ದಾರೆ.(१)

**भष्यम् – न हि चराचरस्य सर्वस्यात्तृत्वमदितेः**

ಅನುವಾದ - ಸಕಲ ಚರಾಚರಪ್ರಪಂಚವನ್ನು ಸಂಹಾರ ಮಾಡುವವನು ಪರಮಾತ್ಮನೇ ಆಗಿದ್ದಾನೆ ಹೊರತು ದೇವಮಾತೆಯಾದ ಅದಿತಿದೇವಿಯಲ್ಲ.

ಪ್ರತಿಪದಾರ್ಥ - ಅದಿತೇಃ = ಕಶ್ಯಪರ ಹೆಂಡತಿಯಾದ ಅದಿತಿಗೆ, ಚರಾಚರಸ್ಯ = ಚೇತನಾಚೇತನಾತ್ಮಕವಾದ, ಸರ್ವಸ್ಯ = ಸಮಸ್ತ ಜಗತ್ತಿನ, ಅತ್ತೃತ್ವಂ = ತಿನ್ನುವಿಕೆಯು, ನ ಹಿ = ಸ್ವಲ್ಪವೂ ಸಹ ಕೂಡುವುದಿಲ್ಲ.(२)

**भष्यम् – 'स्रष्टा पाता तथैवात्ता निखिलस्यैक एव तु ।**
**वासुदेवः परः पुंसामितरेऽल्पस्य वा नवा' इति स्कान्दे ।**

ಅನುವಾದ - ಏಕೆಂದರೆ ಉಪನಿಷತ್ತಿನಲ್ಲಿ ಸಕಲ ಪ್ರಪಂಚದ ಸೃಷ್ಟಿಯನ್ನು, ಪಾಲನೆಯನ್ನು, ಸಂಹಾರವನ್ನು ವಿಷ್ಣು ಒಬ್ಬನೇ ನಿಂತು ಮಾಡುತ್ತಾನೆಂದು ಹೇಳಲಾಗಿದೆ. ಇವನು ಸಕಲ ಜೀವರಾಶಿಗಳಿಗಿಂತ ಸರ್ವೋತ್ತಮನಾದ ವಾಸುದೇವನೇ ಆಗಿದ್ದಾನೆಂದು ಹೇಳಲಾಗಿದೆ. ಆದರೆ ಬ್ರಹ್ಮಾದಿ ಇತರ ದೇವತೆಗಳು ಪ್ರಪಂಚದ ಯಾವುದೋ ಒಂದು ಭಾಗಕ್ಕೆ ಅಸ್ವತಂತ್ರರಾಗಿ ಕರ್ತೃಗಳಾಗಿದ್ದಾರೆಂದು ಉಪನಿಷತ್ತು ಹೇಳಿದೆ.

ಪ್ರತಿಪದಾರ್ಥ - ಏಕೆಂದರೆ, ಸ್ರಷ್ಟಾ = ಸೃಷ್ಟಿಮಾಡುವವನು, ಪಾತಾ = ಪಾಲನೆ ಮಾಡುವವನು, ತಥೈವ = ಅದರಂತೆ, ನಿಖಿಲಸ್ಯ = ಸಮಸ್ತವಾದ, ಅತ್ತಾ =

(१) भाष्यदीपिका – सिद्धान्तयत्सूत्रमवतारयति – अत्रेति ।। इति चोद्ये समाधानमुच्यते सूत्रकृतेति शेषः । अनेन सूत्रेऽत्रोच्यत इति शेषो दर्शितः । तत्सूत्रं पठति – अत्तेति ।। तत्त्वित्यनुवर्तते । विपरिणम्यते च । तथा चात्र वाक्ये यः 'अत्ता' संहर्तोच्यते स विष्णुरेव । कुतः ? 'सर्वं वा अत्ति' इति 'चराचरस्य' चेतनाचेतनरूपस्य विश्वस्याद्यतया संहार्यतया 'ग्रहणात्' चराचरात्तृत्वलिङ्गादिति यावदिति सूत्रार्थः ।।

(२) भाष्यदीपिका – चराचरस्याद्यतया ग्रहणेऽपि कुतो नादितेस्तदत्तृत्वमिति लिङ्गस्य सावकाशत्वशङ्कां निराह – न हीति ।। हिशब्दः प्रसिद्धौ । चराचरस्येति सूत्राक्षराण्यनूद्य श्रुत्यनुसारेण सर्वस्येति व्याख्यानम् । न च सामान्यपदेन व्याख्यानं व्यर्थमिति वाच्यम् । सूत्रस्य श्रुतिविसंवादप्रतीतिनिरासार्थत्वात् । 'अदितेः' देवमातुः । सिद्धमिति शेषः।।

ತಿನ್ನುವವನು, ಏಕಃ ಏವ ತು = ಒಬ್ಬನೇ ಆಗಿದ್ದಾನೆ. ಪುಂಸಾಂ = ದೇಹವನ್ನು ಧಾರಣೆ ಮಾಡಿದ ಜೀವಸಾಮಾನ್ಯನಿಗೆ, ಪರಃ = ಸರ್ವೋತ್ತಮನಾದ, ಸಃ = ಅವನೇ, ವಾಸುದೇವಃ = ವಾಸುದೇವನಾಗಿದ್ದಾನೆ, ಇತರೇ = ಉಳಿದ ಬ್ರಹ್ಮಾದಿ ದೇವತೆಗಳು, ಅಲ್ಪಸ್ಯ ವಾ = ಅಲ್ಪವಸ್ತುವಿನ ತಿನ್ನುವಿಕೆವುಳ್ಳವರು, ವಾ = ಅಥವಾ, ನ = ಅಲ್ಲವೋ, ಇತಿ = ಹೀಗೆ, ಸ್ಕಾಂದೇ = ಸ್ಕಾಂದ ಪುರಾಣದಲ್ಲಿ ಹೇಳಿರುವುದರಿಂದ.(१)

**भाष्यम् – 'एकः पुरस्ताद्य इदं बभूव यतो बभूव भुवनस्य गोपाः । यमप्येति भुवनं साम्पारये स नो हरिर्घृतमिहायुषेऽत्तु देवः' इति 'घृत.सू.) श्रुतिः ॥ ९ ॥**

ಅನುವಾದ - 'ಯಾರೊಬ್ಬನು ಈ ಪ್ರಪಂಚದ ಆದಿಕಾಲದಲ್ಲಿ ಇದ್ದನೋ, ಯಾರಿಂದಲೇ ಈ ಜಗತ್ತು ಸೃಷ್ಟವಾಗಿದೆಯೋ, ಯಾವಾತನು ಜಗತ್ತನ್ನು ರಕ್ಷಿಸಿದ್ದಾನೊ, ಪ್ರಳಯಕಾಲದಲ್ಲಿ ಯಾವ ವ್ಯಕ್ತಿಯಲ್ಲಿ ಈ ಜಗತ್ತು ಲಯ ಹೊಂದುತ್ತದೆಯೋ ಅಂತಹ ಭಗವಂತನೇ ಯಜ್ಞವೇದಿಕೆಗೆ ಆಗಮಿಸಿ ಆಯುಷ್ಯದ ಅಭಿವೃದ್ಧಿಗಾಗಿ ನೀಡಲ್ಪಟ್ಟ ಆಜ್ಯವನ್ನು (ತುಪ್ಪ) ಸ್ವೀಕರಿಸಬೇಕು ಎಂದು ಶ್ರುತಿಯು ಹೇಳಿದೆ.

ಪ್ರತಿಪದಾರ್ಥ - ಏಕಃ = ಒಬ್ಬನೇ, ಪುರಸ್ತಾತ್ = ಜಗತ್ತಿನ ಮೊದಲು, ಬಭೂವ = ಇದ್ದನು, ಇದಂ = ಈ ಜಗತ್ತು, ಯತಃ = ಯಾವಾತನಿಂದ, ಬಭೂವ = ಹುಟ್ಟಿತೋ, ಯಃ = ಯಾವಾತನು, ಭುವನಸ್ಯ = ಸಮಸ್ತ ಜಗತ್ತಿಗೆ, ಗೋಪಾಃ = ರಕ್ಷಕನಾಗಿರುವನೊ, ಭುವನಂ = ಈ ಜಗತ್ತು, ಸಾಂಪರಾಯೇ = ಲಯಕಾಲದಲ್ಲಿ, ಯಂ = ಯಾರ ವಿಷಯದಲ್ಲಿ, ಅಪ್ಯೇತಿ = ಲಯವನ್ನು ಹೊಂದುತ್ತದೆಯೋ, ಸಃ = ಅಂತಹವನೇ, ನಃ = ನಮಗೆ, ಹರಿಃ = ಪಾಪಪರಿಹಾರಕನು, ದೇವಃ = ಕ್ರೀಡಾದಿಗುಣಗಳಿಂದ ವಿಶಿಷ್ಟನಾದವನು, ನಃ = ನಮ್ಮ, ಆಯುಷೇ = ಆಯುಸ್ಸಿನ ಅಭಿವೃದ್ಧಿಗಾಗಿ, ಇಹ = ಯಜ್ಞದಲ್ಲಿ ನೀಡಲ್ಪಟ್ಟ, ಘೃತಂ = ತುಪ್ಪವನ್ನು, ಅತ್ತು = ತಿನ್ನಲಿ, ಇತಿ = ಹೀಗೆ, ಶ್ರುತಿಃ = ಘೃತಸೂಕ್ತವು ಹೇಳಿದೆ.(२)

---

(१) **भाष्यदीपिका** – चराचरात्तृत्वं विष्णोरपि कुतः सिद्धमित्यत आह – स्रष्टेति ।।'पुसां परः' तेभ्यः उत्तमः 'वासुदेवः' कृष्णः 'एक एव' निखिलस्य जगतः एकः स्वतन्त्रः 'स्रष्टा' सृष्टिकर्ता तथा 'पाता' रक्षिता । तुश्चार्थः । अत्ता च । 'वासुदेवेतरे' ब्रह्माद्यास्तु 'अल्पस्य' जगदेकदेशस्यास्वातन्त्र्येण वाक्यशेषः ।।

(२) **भाष्यदीपिका** – स्पष्टार्थत्वात् प्रथमं स्मृतिमुदाहृत्यात्रैवार्थे श्रुतिमप्याह – एक इति ।। एक इत्यस्याऽवृत्तिः, इदमित्यस्याप्यावृत्तिविपरिणामौ । तथा च य एकः 'इदम्'

## श्रीपद्मनाभतीर्थविरचितसत्तर्कदीपावळिः

## ॐ अत्ता चराचरग्रहणात् ॐ ।। १-२-९ ।।

बृहदारण्यके श्रूयते । 'स यद् यदेवासृजत तत्तदत्तुमध्रियत । सर्वं वा अत्तीति तददितेरदितित्वम्' ।। इति । तत्र 'जन्माद्यस्य यतः' इति परमेश्वरधर्मत्वेनोक्तं सर्वसंहर्तृत्वापरपर्यायं सर्वात्तृत्वं प्रतीयमानं विचार्यते । तत्रेदं तावददितेः प्रतिभाति तददितेरदितित्वमिति श्रवणात् । स इति पुल्लिङ्गनिर्देशोऽदितिविषयः कथमिति वाच्यम् । कूटस्थोऽक्षर उच्यत इति प्रकृतिविषयप्रयोगवदुपपद्यते इत्येतं पक्षं प्रतिक्षिपत्सूत्रमुपन्यस्य व्याचष्टे – अत्तेत्यादिना ।। 'स यद्यदेव' इत्यादिनोक्तो विष्णुरेव, नादितिः । 'सर्वं वा अत्ति' इति सर्वात्तृत्वश्रवणात् । नहि सचराचरविश्वं दक्षपुत्र्यदितिरत्ति । विष्णुरेव सर्वात्तेत्यत्र श्रुत्यन्तरं प्रमाणमाह – एक इति ।। स एको भुवनगोप्ता पुरस्तादादो बभूव यत इदं विश्वं बभूव यं च साम्पराये प्रलयकाले निगीर्णोदनवत् समस्तभुवनमप्येति प्रविशति । स देवो हरिरिह यज्ञे नोऽस्माकमायुरर्थं घृतमत्त्विति मन्त्रार्थः । तथाच श्रुत्यन्तरं 'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः' इति ।।

ಬೃಹದಾರಣ್ಯಕದಲ್ಲಿ ಕೇಳಿಸುತ್ತದೆ. "ಸಃ ಯದ್ಯದೇವಾಸೃಜತ ತತ್ತದತ್ತುಮಧ್ರಿಯತ । ಸರ್ವಂ ವಾ ಅತ್ತೀತಿ ತದದಿತೇರದಿತಿತ್ವಮ್"॥ ಎಂದು. ಈ ಶ್ರುತಿಯಲ್ಲಿ 'ಜನ್ಮಾದ್ಯಸ್ಯಯತಃ' ಎಂಬ ಸೂತ್ರದಲ್ಲಿ ಹೇಳಲ್ಪಟ್ಟ ಸರ್ವಸಂಹರ್ತೃತ್ವದ ಅಪರ ಪರ್ಯಾಯವಾದ ಸರ್ವಾತ್ತೃತ್ವವು ಕೇಳಿಸುತ್ತಿದೆ. ಇದನ್ನು ನೋಡಿದಾಗ ಅದಿತಿಯೇ ಸರ್ವಾತ್ತೃ ಎಂದು ತೋರುತ್ತದೆ. "ತದದಿತೇರದಿತಿತ್ವಂ" ಎಂಬ ಶ್ರುತಿಯು ಪ್ರಮಾಣವಾಗಿರುವುದರಿಂದ. ಹಾಗಾದರೆ "ಸಃ" ಎಂಬ ಪುಲ್ಲಿಂಗ ಪ್ರಯೋಗವು ತಪ್ಪಾಗುತ್ತದಲ್ಲವೆ? ಎಂದು ಪ್ರಶ್ನಿಸಬಾರದು. 'ಕೂಟಸ್ಥೋऽಕ್ಷರ ಉಚ್ಯತೇ' ಎಂಬುದಾಗಿ

---

अस्य जगतः 'पुरस्तात्' प्रलये बभूव । यतश्च सृष्टौ 'इदं' जगत् 'बभूव' जातम् । अथ यश्चैको भुवनस्य 'गोपाः' गोप्ता बभूव । यं च 'साम्पराये' मुक्तिप्रलययोः भुवनं प्रविशति निगीर्णौदनवत् । 'सः देवः' हरिः नः 'आयुषे' आयुरर्थे 'इह' यज्ञस्थाने आगत्य 'घृतम्' आहुतिरूपम् 'अत्तु' स्वीकरोत्विति तैत्तिरीयश्रुत्यर्थः मन्त्रद्रष्टृऋषिवाक्यमेतत् । इति श्रुतिरित्यनन्तरं यत इति शेषः । अस्यातोऽपि विष्णोश्चराचरात्तृत्वं सिद्धमित्यन्वयः ।।

ಲಕ್ಷ್ಮೀದೇವಿಯಲ್ಲಿ ಪುಲ್ಲಿಂಗಪ್ರಯೋಗವನ್ನು ಮಾಡಿದಂತೆ ಪ್ರಕೃತ ಅದಿತಿದೇವಿಯಲ್ಲಿ ಮಾಡಿದ ಪುಲ್ಲಿಂಗಪ್ರಯೋಗವು ತಪ್ಪಾಗುವುದಿಲ್ಲ. ಆದ್ದರಿಂದ ಅದಿತಿದೇವಿಯೇ ಸರ್ವಾತ್ತ್ರಿ ಎನಿಸಿದ್ದಾಳೆ.

ಈ ಪೂರ್ವ ಪಕ್ಷವನ್ನು ನಿರಾಸ ಮಾಡುವುದಕ್ಕಾಗಿ ಸೂತ್ರವನ್ನು ಉಪನ್ಯಾಸ ಮಾಡಿ ವ್ಯಾಖ್ಯಾನಿಸುತ್ತಿದ್ದಾರೆ 'ಅರ್ಥ' ಇತ್ಯಾದಿಯಾಗಿ. 'ಸಃ ಯದ್ಯದೇವ' ಎಂಬ ಶ್ರುತಿಯಲ್ಲಿ ಪ್ರತಿಪಾದ್ಯನಾದವನು ವಿಷ್ಣುವೇ ಆಗಿದ್ದಾನೆ ಹೊರತು ಅದಿತಿಯಲ್ಲ. ಏಕೆಂದರೆ 'ಸರ್ವಂ ವಾ ಅತ್ತಿ' ಎಂಬುದಾಗಿ ಸರ್ವಾತ್ತೃತ್ವವು ಕೇಳಿಸುತ್ತಿರುವುದರಿಂದ. ದಕ್ಷನ ಮಗಳಾದ ಅದಿತಿಯು ಚರಾಚರಾತ್ಮಕವಾದ ಪ್ರಕೃತಿಯನ್ನು ತಿನ್ನಲು ಸಮರ್ಥಳಾಗಿಲ್ಲ. ಆದ್ದರಿಂದ ವಿಷ್ಣುವೇ ಸಮರ್ಥನೆನಿಸಿದ್ದಾನೆಂದು ಮತ್ತೊಂದು ಪ್ರಮಾಣವನ್ನು 'ಏಕಃ' ಇತ್ಯಾದಿಯಾಗಿ ಹೇಳುತ್ತಿದ್ದಾರೆ. "ಸ ಏಕೋ ಭುವನಗೋಪ್ತಾ ಪುರಸ್ತಾದಾದೌ ಬಭೂವ ಯತ ಇದಂ ವಿಶ್ವಂ ಬಭೂವ ಯಂ ಚ ಸಾಂಪರಯೇ ಪ್ರಲಯಕಾಲೇ ನಿಗೀರ್ಣೋದನವತ್ಸಮಸ್ತಭುವನಮಪ್ಯೇತಿ ಪ್ರವಿಶತಿ । ಸ ದೇವೋ ಹರಿರಿಹ ಯಜ್ಞೇನೋಽಸ್ಮಾಕಮಾಯುರರ್ಥಂ ಘೃತಮತ್ತು" - "ಯಾರಿಂದ ಈ ಜಗತ್ತು ಹುಟ್ಟಿದೆಯೋ ಪ್ರಳಯಕಾಲದಲ್ಲಿ ಅವನಿಂದಲೇ ಲಯ ಹೊಂದುತ್ತದೆ. ಅಂತಹವನು ದೇವಶ್ರೇಷ್ಠನಾದ ಶ್ರೀಹರಿಯೇ ಆಗಿದ್ದಾನೆ. ಅವನು ನಾವು ಮಾಡುವ ಯಜ್ಞದಿಂದ ಪ್ರಸನ್ನನಾಗಿ ಆಯುಷ್ಯವನ್ನು ಅಭಿವೃದ್ಧಿಗೊಳಿಸಲಿ ಎಂದು ಅಭಿಪ್ರಾಯ. ಆದ್ದರಿಂದ ಈ ವಿಷಯದಲ್ಲಿ "ಯಸ್ಯ ಬ್ರಹ್ಮ ಚ ಕ್ಷತ್ರಂ ಚೋಭೇ ಭವತ ಓದನಃ ಮೃತ್ಯುರ್ಯಸ್ಯೋಪಸೇಚನಂ ಕ ಇತ್ಥಾ ವೇದ ಯತ್ರ ಸಃ"ಎಂಬ ಮತ್ತೊಂದು ಶ್ರುತಿಯು ಆಧಾರವಾಗಿದೆ.

## ॐ अत्ता चराचरग्रहणात् ॐ ।। १-२-९ ।।

**तत्वप्रकाशिका** – अत्र लोकतोऽन्यत्रप्रसिद्धादितिशब्देन सहोक्तात्तृत्वलिङ्गस्य हरौ समन्वयप्रतिपादनादस्ति शास्त्रादिसङ्गतिः । श्रुत्यादिसङ्गतिं विषयवाक्यमुदाहृत्य विषयसंशयौ सयुक्तिकं पूर्वपक्षं च सूचयति – जन्मेति ।। 'जन्माद्यस्य यतः' इति सूत्रे जन्मादिकारणत्वं विष्णोरुक्तम् । तन्मध्यपतितं संहर्तृत्वापरपर्यायवाच्यमत्तृत्वं बृहदारण्यके कस्यचित् श्रूयते । 'सोऽदितिर्यद् यदसृजत तत्तदत्तुं मनोऽध्रियतादच । कुतः सवात्त्री सा सर्वमत्तीति यत्तदेव हि अदितेरदितित्वं अदितिशब्दप्रवृत्तिनिमित्तम् । अन्यथा तन्न स्यादिति । तच यदा हरेरितरस्य स्यात्तदा प्रागुक्तलक्षणस्यातिव्याप्तिप्रसङ्गादवश्यं निर्णेयमेव ।

ಈ ಅಧಿಕರಣದಲ್ಲಿ ಲೋಕರೀತ್ಯಾ ಅನ್ಯತ್ರಪ್ರಸಿದ್ಧವಾದ ಶಬ್ದದೊಂದಿಗೆ ಹೇಳಲ್ಪಟ್ಟ ಅತ್ತೃತ್ವಲಿಂಗವನ್ನು ಶ್ರೀಹರಿಯಲ್ಲಿ ಸಮನ್ವಯ ಮಾಡುತ್ತಿರುವುದರಿಂದ ಶಾಸ್ತ್ರ, ಅಧ್ಯಾಯ, ಪಾದ ಸಂಗತಿಗಳಿವೆ ಎಂದು ತಿಳಿಯಬೇಕು. ಶ್ರುತಿ ಮತ್ತು ಅಧಿಕರಣಗಳ ಸಂಗತಿಗಳನ್ನು ವಿಷಯವಾಕ್ಯವನ್ನು ಉದಾಹರಿಸಿ ಹೇಳುತ್ತಿದ್ದಾರೆ. ಮತ್ತು ವಿಷಯವಾಕ್ಯದಿಂದಲೇ ವಿಷಯ, ಸಂಶಯಗಳನ್ನು ಮತ್ತು ಯುಕ್ತಿಸಹಿತವಾಗಿ ಪೂರ್ವಪಕ್ಷವನ್ನೂ ಸಹ ಸೂಚನೆ ಮಾಡುತ್ತಿದ್ದಾರೆ.

ಟೀಕೆಯಲ್ಲಿ ''ಜನ್ಮ'' ಎಂದಿದೆ. ಇದರ ಅಭಿಪ್ರಾಯ. ''ಜನ್ಮಾದ್ಯಸ್ಯ ಯತಃ'' ಎರಡನೆಯ ಎಂಬ ಸೂತ್ರದಲ್ಲಿ ಸೃಷ್ಟ್ಯಾದಿಗಳಿಗೆ ವಿಷ್ಣುವೇ ಕಾರಣನಾಗಿದ್ದಾನೆಂದು ಹೇಳಲ್ಪಟ್ಟಿದೆ. ಆದರೆ ಬೃಹದಾರಣ್ಯಕೋಪನಿಷತ್ತಿನಲ್ಲಿ ಸಂಹಾರಕರ್ತೃತ್ವವನ್ನು ಅತ್ತೃತ್ವಪದದಿಂದ ಯಾರೋ ಒಬ್ಬರಿಗೆ ಹೇಳಿದಂತೆ ಕೇಳಿಸುತ್ತಿದೆ. ''ಸೋಽದಿತಿರ್ಯದ್ಯದಸೃಜತ ತತ್ತದತ್ತುಂ ಮನೋಽಧ್ರಿಯತಾದಾಚ್ಚ । ಕುತಃ ಸರ್ವಾತ್ರೀ ಸಾ ಸರ್ವಮತ್ತಿ'' ''ಆ ಅದಿತಿಯು ಯಾವುದನ್ನು ಸೃಷ್ಟಿ ಮಾಡಿದಳೋ ಅದನ್ನೆಲಾ ತಿನ್ನಬೇಕೆಂದು ಮನಸ್ಸು ಮಾಡಿದಳು ಮತ್ತು ತಿನ್ನುವವಳೂ ಆದಳು. ಏಕೆಂದರೆ ಸರ್ವಭಕ್ಷಣ ಮಾಡುವವಳಾದ್ದರಿಂದ'' ಆದ್ದರಿಂದಲೇ ಅವಳಿಗೆ 'ಅದಿತಿ' ಎಂಬ ಹೆಸರು ಬಂದಿದೆ. ಅದಕ್ಕಾಗಿಯೇ ಸರ್ವಸಂಹಾರಕರ್ತೃತ್ವ ಅದಿತಿಯಲ್ಲಿ ಕೇಳಿಬರುತ್ತಿದೆ. ಒಂದು ವೇಳೆ ವಿಷ್ಣುವಿನ ಅಸಾಧಾರಣ ಧರ್ಮವಾದ ಸಂಹರ್ತೃತ್ವವು ಅನ್ಯರಲ್ಲಿಯೂ ಇದ್ದ ಪಕ್ಷದಲ್ಲಿ ಅತಿವ್ಯಾಪ್ತಿವೆಂಬ ದೋಷ ಬರುತ್ತದೆ. ಆದ್ದರಿಂದ ಅವಶ್ಯವಾಗಿ ನಿರ್ಣಯ ಮಾಡಬೇಕಾಗಿದೆ.

**तत्वप्रकाशिका – तदत्तृत्वं विषयः । किं विष्णोरन्यस्य वेति सन्देहः । लक्षणसूत्रमदितिश्रुतिश्च सन्देहबीजम् । अदितेरेव तदत्तृत्वमिति पूर्वः पक्षः । 'तददितेः' इत्यादिश्रुतेः । नच श्रुतिर्विष्णुविषया किन्न स्यादुक्तन्यायादिति वाच्यम्, अदितित्वलिङ्गात् । नह्यदितिभिन्नस्यादितित्वं सम्भवति । अतो न प्रागुक्तं ब्रह्मलक्षणं युक्तमिति भावः।**

ಆದ್ದರಿಂದ ಈ ಅಧಿಕರಣಕ್ಕೆ ಅತ್ತೃತ್ವವೇ ವಿಷಯವಾಗಿದೆ. ವಿಷ್ಣುವೋ ಅಥವಾ ಅನ್ಯರೋ? ಎಂಬುದೇ ಸಂದೇಹ. ವಿಷ್ಣುವಿನ ಲಕ್ಷಣವನ್ನು ನಿರೂಪಿಸುವ 'ಜನ್ಮಾದ್ಯಸ್ಯ ಯತಃ' ಎಂಬ ಸೂತ್ರ ಮತ್ತು ಅದಿತಿಶ್ರುತಿಯೇ ಸಂದೇಹಕ್ಕೆ ಕಾರಣ. ಅದಿತಿಯೇ ಸರ್ವ ಸಂಹಾರ ಮಾಡುವವಳೆಂದು ಪೂರ್ವಪಕ್ಷ. ಈ ವಿಷಯದಲ್ಲಿ 'ತದದಿತೇಃ' ಎಂಬ ಶ್ರುತಿ ಪ್ರಮಾಣವಾಗಿದೆ. ಅದಿತಿ ಶಬ್ದಕ್ಕೆ ಮಹಾಯೋಗವೃತ್ತಿಯಿಂದ ಮತ್ತು ಅಂತರ್ಯಾಮಿವಿವಕ್ಷೆಯಿಂದ ವಿಷ್ಣುವೇ ವಾಚ್ಯನಾಗಿದ್ದಾನೆಂದು ಹೇಳಲು ಬರುವುದಿಲ್ಲ. ಏಕೆಂದರೆ ಅದಿತಿತ್ವವೆಂಬ ಲಿಂಗವು ಆಧಾರವಾಗಿದೆ. ಅದಿತಿದೇವಿಗಿಂತ ಬೇರೆಯವರಲ್ಲಿ ಅದಿತಿತ್ವವು ಕೂಡುವುದಿಲ್ಲ. ಆದ್ದರಿಂದ ಹಿಂದಿನ ಜನ್ಮಾಧಿಕರಣದಲ್ಲಿ ಹೇಳಿದ ಬ್ರಹ್ಮನ ಲಕ್ಷಣವು ಯುಕ್ತವಲ್ಲವೆಂದು ಅಭಿಪ್ರಾಯ.

ಪರಿಪೂರ್ಣಚಂದ್ರಿಕಾ

**तत्वप्रकाशिका – नन्वेतदत्तृत्वमदितेश्चेत्कथं स इति पुल्लिङ्गं युक्तं स्यादतस्तेन श्रुत्यादिबाध इत्यत आह – स इति ।। यथा रमायां पुंशक्तिमत्त्वात् पुल्लिङ्गप्रयोगः । 'कूटस्थोऽक्षर उच्यते' 'सोऽहं वायुं दिशां वत्सं वेद' इत्यादौ, तथा अत्रापि सम्भवतीति भावः । यदाहुः 'पुल्लिङ्गेनोच्यते स्त्री च पुंवच्छक्तिमती क्वचित्' इति । ननु स इति प्रकृतसंवत्सरपरामर्शान्नैतच्चोद्यावकाशः । मैवम् । 'स तया वाचा तेन आत्मनेदं सर्वमसृजत' इत्युक्तस्यैव 'स यद् यदेव' इत्यनुवादात् । तत्र विरिञ्चस्य तृतीयया प्रकृतत्वाददित्याख्यमृत्योरेव प्रथमया प्रकृतत्वात् । तथाच सोऽदितिः संवत्सरेण यद् यदसृजतेति योजनायामस्ति चोद्यावकाशः**

ಶಂಕಾ - ಒಂದು ವೇಳೆ ಈ ಅತ್ತೃತ್ವವು ಅದಿತಿದೇವಿಯ ಶಕ್ತಿಯಾದರೆ ಶ್ರುತಿಯಲ್ಲಿರುವ 'ಸಃ' ಎಂಬ ಪುಲ್ಲಿಂಗವು ಹೇಗೆ ಕೂಡುತ್ತದೆ? ಆದ್ದರಿಂದ ಪುಲ್ಲಿಂಗ ಶಬ್ದವಿರುವುದರಿಂದ ಶ್ರುತಿಯು ಬಾಧ್ಯವಾಗುತ್ತದಲ್ಲವೇ?

ಸಮಾಧಾನ - ಈ ಶಂಕೆಗೆ ಸಮಾಧಾನವನ್ನು ಭಾಷ್ಯದಲ್ಲಿ 'ಸಃ' ಎಂಬ ವಾಕ್ಯದಿಂದ ಹೇಳುತ್ತಿದ್ದಾರೆ. ಯಾವ ರೀತಿಯಾಗಿ ಲಕ್ಷ್ಮೀದೇವಿಗೆ ಪುರುಷಸಮಾನವಾದ ಶಕ್ತಿ ಇರುವುದರಿಂದ 'ಕೂಟಸ್ಥೋಽಕ್ಷರ ಉಚ್ಯತೇ' ಮತ್ತು 'ಸೋಽಹಂ ವಾಯುಂ ದಿಶಾಂ ವತ್ಸಂ ವೇದ' ಇತ್ಯಾದಿ ಕಡೆಗಳಲ್ಲಿ ಪುಲ್ಲಿಂಗ ಪ್ರಯೋಗವು ಬಾಧ್ಯವಾಗಿಲ್ಲವೋ; ಅದರಂತೆ ಇಲ್ಲಿಯೂ ಸಹ ಅದಿತಿಗೆ 'ಸಃ' ಎಂಬ ಪುಲ್ಲಿಂಗ ಪ್ರಯೋಗವಿರುತ್ತದೆಂದು ತಿಳಿಯಬೇಕು. ಈ ವಿಷಯದಲ್ಲಿ "ಪುಲ್ಲಿಂಗೇನೋಚ್ಯತೇ ಸ್ತ್ರೀಚ ಪುಂವಚ್ಛಕ್ತಿಮತೀ ಕ್ವಚಿತ್" ಎಂಬ ಪ್ರಮಾಣವೂ ಸಹ ಇದೆ.

ಶಂಕಾ - "ಸೋಽದಿತಿಃ" ಎಂಬ ವಾಕ್ಯದಲ್ಲಿ "ಸಃ" ಎಂಬ ಪದದಿಂದ ಪೂರ್ವಪ್ರಸಕ್ತನಾದ ಸಂವತ್ಸರನಾಮಕ ಪ್ರಜಾಪತಿಯನ್ನು ಪರಾಮರ್ಶ ಮಾಡಲಾಗಿದೆ. ಆದ್ದರಿಂದ ಹಿಂದೆ ಮಾಡಿದ ಶಂಕೆಗೆ ಅವಕಾಶವಿಲ್ಲವಲ್ಲ?

ಸಮಾಧಾನ - ಈ ರೀತಿಯಾಗಿ ಹೇಳಲು ಬರುವುದಿಲ್ಲ. ಏಕೆಂದರೆ "ಸ ತಯಾ ವಾಚಾ ತೇನಾತ್ಮನಾ ಇದಂ ಸರ್ವಮಸೃಜತ" (ಮೃತ್ಯುನಾಮಕ ಪರಮಾತ್ಮನು ಮೊದಲು ಹುಟ್ಟಿದ ವಾಣಿಯಿಂದಲೂ ಮತ್ತು ಚತುರ್ಮುಖನಿಂದಲೂ ಈ ಸರ್ವ ಜಗತ್ತನ್ನು ಸೃಷ್ಟಿ ಮಾಡಿದನು) ಎಂಬ ಪೂರ್ವವಾಕ್ಯದಲ್ಲಿ "ಸಃ" ಎಂದು ಪ್ರಸಕ್ತನಾದ ಪರಮಾತ್ಮನನ್ನೇ "ಸ ಯದ್ಯದೇವ" ಎಂಬ ವಾಕ್ಯದಲ್ಲಿ "ಸಃ" ಎಂಬ ಪದದಿಂದ ಅನುವಾದ ಮಾಡಿದ್ದಾರೆ. ಏಕೆಂದರೆ ಪೂರ್ವವಾಕ್ಯದಲ್ಲಿ ತೃತೀಯಾವಿಭಕ್ತ್ಯಂತಪದವಾದ "ತೇನಾತ್ಮನಾ" ಎಂಬುದರಿಂದ ಬ್ರಹ್ಮದೇವನನ್ನು ನಿರ್ದೇಶ ಮಾಡಿದ್ದಾರೆ. ಮತ್ತು ಅದಿತಿ ಎಂಬ ಹೆಸರಿನಿಂದಲೇ ಮೃತ್ಯುವನ್ನು ಪ್ರಥಮಾವಿಭಕ್ತ್ಯಂತವಾಗಿ ನಿರ್ದೇಶ

ಮಾಡಿದ್ದಾರೆ. ಆದ್ದರಿಂದ "ಆ ಅದಿತಿಯು ಸಂವತ್ಸರ ಎಂಬ ಹೆಸರುಳ್ಳ ಪ್ರಜಾಪತಿಯು ಯಾವದನ್ನೆಲ್ಲಾ ಸೃಷ್ಟಿ ಮಾಡಿದನೋ" - ಎಂದು ಅರ್ಥ ಮಾಡಲಾಗಿದೆ. ಆದ್ದರಿಂದ ಅದಿತಿಯು ಸ್ತ್ರೀ ಆಗಿರುವುದರಿಂದ ಅವಳ ವಿಷಯದಲ್ಲಿ "ಸಃ" ಎಂಬ ಪುಲ್ಲಿಂಗ ಪ್ರಯೋಗ ಹೇಗೆ ? ಎಂಬ ಶಂಕೆಗೆ ಅವಕಾಶ ಇದ್ದೇ ಇರುತ್ತದೆ.

**तत्वप्रकाशिका – सिद्धान्तयत्सूत्रमवतारयति – अत्रेति ।। विष्णुरेवात्ताऽत्रोच्यते। सर्वं वा अत्तीति चराचरस्याद्यतया ग्रहणादिति सूत्रार्थः । चराचरग्रहणेऽपि कुतो नादितेरत्तृत्वमित्यत आह – नहीति ।। चराचरस्येति सूत्राक्षराण्यनूद्य श्रुत्यनुसारेण सर्वस्येति व्याख्यानम् । सूत्रस्य श्रुतिविसंवादप्रतीति-निरासोऽस्य प्रयोजनम् । चराचरात्तृत्वं विष्णोरपि कुत इत्यत आह – स्रष्टेति ।। अस्वातन्त्र्येणाल्पस्य भवन्ति स्वातन्त्र्यापेक्षया न वा । 'य एकोऽस्य पुरस्ताद् बभऊव सृष्टाविदं जगद् यतो बभऊव । यश्च भुवनस्य गोप्ता यं च मुक्तिप्रलययोर्भुवनं प्रविशति स हरिर्न आयुरथे घृतमाहुतिरूपमत्' इत्यर्थः । नच वाच्यं श्रुतिलिङ्गाभ्यां पूर्वपक्षे कथं लिङ्गमात्रेण निर्णय इति । लिङ्गस्योक्तरीत्या निरवकाशत्वात् । अदितिश्रुतेर्विष्णावपि सावकाशत्वात् । लिङ्गस्य चादितिशब्दवाच्यत्वमदितित्वमिति सावकाशत्वात् । सावकाशश्रुतिलिङ्गाभ्यां निरवकाशलिङ्गमात्रस्य प्राबल्यात् ।।९।।**

ಹೀಗೆ ಪೂರ್ವಪಕ್ಷ ಬಂದರೆ ಸಿದ್ಧಾಂತ ಮಾಡುವ ಸೂತ್ರವನ್ನು "ಅತ್ರ" ಇತ್ಯಾದಿ ವಾಕ್ಯಗಳಿಂದ ಹೇಳುತ್ತಿದ್ದಾರೆ. "ಸರ್ವಂ ವಾ ಅತ್ತಿ" ಎಂಬ ಶ್ರುತಿಯಲ್ಲಿ ವಿಷ್ಣುವೇ ಸರ್ವಸಂಹಾರಕನೆಂದು ಗ್ರಹಣ ಮಾಡಿರುವುದರಿಂದ ಸರ್ವಚರಾಚರಪ್ರಪಂಚವನ್ನು ಸಂಹಾರ ಮಾಡುವವನು ವಿಷ್ಣುವೇ ಆಗಿದ್ದಾನೆಂದು ಸೂತ್ರಾರ್ಥ.

ಶಂಕಾ - ಶ್ರುತಿಯಲ್ಲಿ 'ಸರ್ವ' ಎಂಬ ಶಬ್ದದಿಂದ ಚರಾಚರವಿಶ್ವವನ್ನು ಗ್ರಹಣ ಮಾಡಿದರೂ, ಈ ಚರಾಚರವಿಶ್ವದ ಸಂಹರ್ತೃ ಅದಿತಿದೇವಿಯೇ ಎಂದು ಏಕೆ ಹೇಳಬಾರದು?

ಸಮಾಧಾನ - ಭಾಷ್ಯದಲ್ಲಿ "ನ ಹಿ" ಎಂಬ ವಾಕ್ಯದಿಂದ ಇದಕ್ಕೆ ಸಮಾಧಾನವನ್ನು ಹೇಳಿದ್ದಾರೆ.

"ಚರಾಚರಸ್ಯ ಸರ್ವಸ್ಯ" ಎಂದು ಭಾಷ್ಯದಲ್ಲಿ ಹೇಳಿರುವುದು "ಚರಾಚರ" ಎಂಬ ಸೂತ್ರಾಕ್ಷರವನ್ನು ಅನುಸರಿಸಿ ಅನುವಾದವನ್ನು ಮಾಡಿದ್ದಾರೆ. ಅಲ್ಲದೆ "ಸರ್ವಂ" ಎಂಬ ಶ್ರುತಿಯಲ್ಲಿನ ಪದದ ವ್ಯಾಖ್ಯಾನವೂ ಸಹ ಆಗಿದೆ. ಈ ರೀತಿಯಾಗಿ ವ್ಯಾಖ್ಯಾನ ಮಾಡುವ ಪ್ರಯೋಜನವೇನೆಂದರೆ ಶ್ರುತಿಗೂ ಸೂತ್ರಕ್ಕೂ ವಿರುದ್ಧವಾದ ಅರ್ಥವಿದೆ ಎಂಬ ಭ್ರಾಂತಿಯನ್ನು ನಿರಾಸ ಮಾಡುವಿಕೆ.

ಈ ಚರಾಚರ ಪ್ರಪಂಚದ ಸಂಹಾರಕನು ವಿಷ್ಣುವೇ ಎಂಬುದಕ್ಕೆ ಪ್ರಮಾಣ ಏನು ? ಎಂಬ ಪ್ರಶ್ನೆಗೆ ''ಸ್ರಷ್ಟಾ'' ಎಂಬ ಸ್ಮೃತಿವಾಕ್ಯದಿಂದ ಉತ್ತರವನ್ನು ಹೇಳುತ್ತಿದ್ದಾರೆ. ಸ್ಮೃತಿಯಲ್ಲಿರುವ ''ಅಲ್ಪಸ್ಯ ವಾ ನ ವಾ'' ಎಂದರೆ ಅಸ್ವತಂತ್ರವಾಗಿ ಅಲ್ಪಸೃಷ್ಟಿಗೆ ಬ್ರಹ್ಮಾದಿದೇವತೆಗಳು ಕಾರಣರು. ಆದರೆ ಸ್ವತಂತ್ರವಾಗಿ ಎಂದಿಗೂ ಸೃಷ್ಟಿಕರ್ತೃಗಳಲ್ಲ.

''ಯಾವ ಒಬ್ಬನೇ ಈ ವಿಶ್ವದ ಪೂರ್ವದಲ್ಲಿ ಇದ್ದನೋ, ಸೃಷ್ಟಿಕಾಲದಲ್ಲಿ ಇದು ಯಾರಿಂದ ಹುಟ್ಟಿತೋ, ಮತ್ತು ಯಾರು ಈ ವಿಶ್ವದ ರಕ್ಷಕನೋ, ಅನಂತರದಲ್ಲಿ ಯಾರಲ್ಲಿ ಪ್ರಲಯಕಾಲದಲ್ಲಿ ಮತ್ತು ಮುಕ್ತಿಯ ಅವಸ್ಥೆಯಲ್ಲಿ ಪ್ರವೇಶ ಮಾಡುವುದೋ, ಆ ಶ್ರೀಹರಿಯು ನಮ್ಮ ಆಯುಷ್ಯದ ಅಭಿವೃದ್ಧಿಗೋಸ್ಕರ ಈ ಯಜ್ಞದಲ್ಲಿ ನೀಡಿದ ತುಪ್ಪದ ಆಹುತಿಯನ್ನು ಸ್ವೀಕರಿಸಲಿ'' ಎಂದು ಶ್ರುತಿಯ ಅರ್ಥ.

ಶಂಕಾ - ಅದಿತಿ ಎಂಬ ಶ್ರುತಿ, ಮತ್ತು ''ಅತ್ತಾ ಇತಿ ಅದಿತಿಃ'' ಎಂಬ ಅದಿತಿ ಶಬ್ದದ ಪ್ರವೃತ್ತಿನಿಮಿತ್ತರೂಪವಾದ ಲಿಂಗ ಈ ಎರಡು ಪ್ರಮಾಣಗಳಿಂದ ಪೂರ್ವಪಕ್ಷ ಮಾಡಿರಬೇಕಾದರೆ, ಕೇವಲ ಸರ್ವಸಂಹರ್ತೃತ್ವರೂಪವಾದ ಧರ್ಮದಿಂದ ಅದಿತಿತ್ವ ಧರ್ಮವು ವಿಷ್ಣುವಿನದ್ದೇ ಎಂದು ನಿರ್ಣಯ ಮಾಡಲು ಕಾರಣವೇನು?

ಸಮಾಧಾನ - ಅದಿತಿಶಬ್ದದ ಅರ್ಥವಾದ ಸರ್ವಸಂಹರ್ತೃತ್ವವು ದೇವಮಾತೆಯಾದ ಅದಿತಿಯಲ್ಲಿ ಸಂಭವಿಸುವುದಿಲ್ಲ. ಆದ್ದರಿಂದ ಈ ಲಿಂಗವು ವಿಷ್ಣುವಿನಲ್ಲಿ ನಿರವಕಾಶವಾಗಿದೆ. ಮತ್ತು ಅದಿತಿ ಶ್ರುತಿಯು ವಿಷ್ಣುವಿನಲ್ಲಿ ಸಾವಕಾಶವಾಗಿದೆ. ಹೇಗೆಂದರೆ ವಿಷ್ಣುವು ಸರ್ವಶಬ್ದವಾಚ್ಯನಾಗಿರುವುದರಿಂದ ಮತ್ತು ಸರ್ವಾಂತರ್ಯಾಮಿಯಾಗಿರುವುದರಿಂದ. ಮತ್ತು ಅದಿತಿಶಬ್ದವಾಚ್ಯತ್ವವೆಂಬ ಲಿಂಗವೂ ಸಹ ವಿಷ್ಣುವಿನಲ್ಲಿ ಸಾವಕಾಶವಾದ್ದರಿಂದ ಸಾವಕಾಶವಾದ ಶ್ರುತಿ ಲಿಂಗಗಳಿಗಿಂತ ನಿರವಕಾಶವಾದ ಲಿಂಗವೇ ಪ್ರಬಲವಾಗಿದೆ. ಆದ್ದರಿಂದ ಅದಿತಿ ಎಂದರೆ ವಿಷ್ಣುವೆಂಬ ನಿರ್ಣಯವು ಯುಕ್ತವೇ ಆಗಿದೆ.

**ॐ अत्ता चराचरग्रहणात् ॐ ।। १-२-९ ।।**

**भावदीपः** – प्रतीयत इत्यन्तं भाष्यं सङ्गतिपरत्वेन व्याचष्टे – **जन्माद्यस्येति ।। तत्रेत्यस्यार्थः – तन्मध्यपतितेति ।। अपरपर्यायेति ।।** 'अद्यतेऽत्ति च भूतानि' 'स सर्गकाले तु करोति सर्वं संहारकाले तु तदत्ति भूयः' इत्यादेः विष्णोः संहर्तृत्वस्योर्णनाभ्यादिवदेवात्तृत्वरूपत्वादिति भावः । एतच्च **पूर्वाक्षेपलाभायोक्तम्** । अन्यथाऽत्तृत्वस्यान्यनिष्ठत्वे जन्मादिसूत्रोक्तसंहर्तृत्वरूपलक्षणाक्षेपो न स्यादिति भावः । श्रूयत इति तृतीयाध्याये । आदच्चेति शेषोक्तिः । अभक्षयच्चेत्यर्थः । तत्र हेतुत्वेन श्रुतिशेषं योजयति – कुत इति ।। सेति शेषः ।

**तदर्थः – सर्वात्त्रीति** ।। तदेव सर्वात्तृत्वमेवादितित्वनिमित्तम् । अदितिपदवाच्यत्वे निमित्तमित्यर्थः । अन्यथा सर्वात्तृत्वाभावे तद् अदितिपदवाच्यत्वम् अदितिर्देवतामयीत्यादौ न स्यात् । अस्ति च तत् । अतो 'अदितिर्देवतामयी' इत्यादौ अदितिपदवाच्यत्वमेव सर्वात्तृत्वे हेतुरित्यर्थः । इति श्रूयते इत्यन्वयः । तेन भाष्ये इति शब्दानन्तरं श्रूयत इति तच्चेति शेष इति दर्शितम् ।

'ಅದಿತೇಃ ಪ್ರತೀಯತೇ' ಎಂಬಲ್ಲಿಯ ತನಕದ ಭಾಷ್ಯವನ್ನು ಸಂಗತಿ ಪರವಾಗಿ ವ್ಯಾಖ್ಯಾನಿಸುತ್ತಿದ್ದಾರೆ 'ಜನ್ಮಾದ್ಯಸ್ಯ' ಇತ್ಯಾದಿಯಾಗಿ. 'ತತ್ರ' ಎಂಬ ಪದದ ಅರ್ಥವನ್ನು 'ತನ್ಮಧ್ಯಪತಿತಃ' ಎಂದು ಹೇಳಿದ್ದಾರೆ. 'ಅಪರ ಪರ್ಯಾಯಃ' ಎಂಬುದರ ಅರ್ಥ ಹೀಗಿದೆ - 'ಅದ್ಯತೇಽತ್ತಿ ಚ ಭೂತಾನಿ' 'ಸ ಸರ್ಗಕಾಲೇ ತು ಕರೋತಿ ಸರ್ವಂ ಸಂಹಾರಕಾಲೇ ತು ತದತ್ತಿಭೂಯಃ' ಇತ್ಯಾದಿ ವಾಕ್ಯಗಳು ವಿಷ್ಣುವಿನಲ್ಲಿ ಸಂಹರ್ತೃತ್ವವನ್ನು ಉರ್ಣಾನಾಭಿಯ ದೃಷ್ಟಾಂತದಂತೆ ಪ್ರತಿಪಾದಿಸುತ್ತಿದೆ. ಆದ್ದರಿಂದ ಭಗವಂತ ನಡೆಸುವ ಸಂಹಾರ ಕ್ರಿಯೆಯು ಅತ್ತೃತ್ವರೂಪವಾಗಿದೆಯೆಂದು ತಿಳಿಯಬೇಕು. ಅತ್ತೃತ್ವವನ್ನು ಸಂಹರ್ತೃತ್ವರೂಪವೆಂದು ಹೇಳಿದ್ದರಿಂದ ಹಿಂದಿನ ಜನ್ಮಾಧಿಕರಣದ ಪ್ರಮೇಯವನ್ನು ಆಕ್ಷೇಪಿಸಿದಂತಾಯಿತು. ಇಲ್ಲದಿದ್ದರೆ ಅತ್ತೃತ್ವವನ್ನು ಬೇರೆ ವ್ಯಕ್ತಿಯಲ್ಲಿ ಹೇಳಿದಂತಾಗಿ ಜನ್ಮಾದಿಸೂತ್ರದಲ್ಲಿ ಹೇಳಲ್ಪಟ್ಟ ಸಂಹರ್ತೃತ್ವವೆಂಬ ವಿಷ್ಣುವಿನ ಲಕ್ಷಣವನ್ನು ಆಕ್ಷೇಪಿಸಿದಂತಾಗುವುದಿಲ್ಲ.

'ಶ್ರೂಯತೇ' ಎಂದರೆ ಮೂರನೆಯ ಅಧ್ಯಾಯದಲ್ಲಿ ಕೇಳಿಸುತ್ತಿದೆಂದರ್ಥ. 'ಆದಾಚ' ಎಂಬುದನ್ನು ಭಾಷ್ಯದಲ್ಲಿ ಶೇಷಪೂರಣ ಮಾಡಿಕೊಳ್ಳಬೇಕು. 'ತಿಂದನು' ಎಂದಿದರ ಅರ್ಥ. ಈ ವಿಷಯದಲ್ಲಿ ಹೇತುಪರವಾಗಿ ಶ್ರುತಿಶೇಷವನ್ನು ಪೂರಣಮಾಡುತ್ತಿದ್ದಾರೆಂದರ್ಥ. 'ಕುತಃ' ಎಂಬಲ್ಲಿ 'ಸಃ' ಎಂಬುದನ್ನು ಸೇರಿಸಿಕೊಳ್ಳಬೇಕು. ಅದರರ್ಥ 'ಸರ್ವಾತ್ರೀ' ಎಂದು. ಸರ್ವಾತ್ತೃತ್ವವೇ ಇದರ ಪ್ರವೃತ್ತಿನಿಮಿತ್ತವಾಗಿದೆ. ಅಂದರೆ ಅದಿತಿಶಬ್ದದ ಪ್ರವೃತ್ತಿಯಾಗಿದೆ ಎಂದರ್ಥ. ಹೀಗೆ ಸರ್ವಾತ್ತೃತ್ವವನ್ನು ಅದಿತಿಯಲ್ಲಿ ಒಪ್ಪದಿದ್ದರೆ ಅದಿತಿಪದವಾಚ್ಯತ್ವವು 'ಅದಿತಿರ್ದೇವತಾಮಯಿ' ಎಂಬಲ್ಲಿ ಇಲ್ಲದಿರಬೇಕಾದೀತು. ಅದಿತಿಪದ-ವಾಚ್ಯತ್ವವಿರುವುದರಿಂದ 'ಅದಿತಿರ್ದೇವತಾಮಯಿ' ಎಂಬಲ್ಲಿ ಅದಿತಿಪದವಾಚ್ಯತ್ವವೇ ಸರ್ವಾತ್ತೃತ್ವದಲ್ಲಿ ಹೇತುವಾಗಿದೆಯೆಂದು ತಿಳಿಯುತ್ತದೆ. 'ಇತಿ' ಪದಕ್ಕೆ 'ಶ್ರೂಯತೇ' ಎಂಬಲ್ಲಿ ಅನ್ವಯ. ಇದರಿಂದ ಭಾಷ್ಯದಲ್ಲಿ 'ಇತಿ' ಪದದ ಅನಂತರ 'ಶ್ರೂಯತೇ' ಎಂಬ ಪದವನ್ನು ಮತ್ತು 'ತಚ್ಚ' ಎಂಬ ಪದವನ್ನು ಶೇಷಪೂರಣ ಮಾಡಬೇಕೆಂದು ತಿಳಿಯುತ್ತದೆ.

**भावदीपः** - अदितेः प्रतीयत इत्यस्य तात्पर्यमाह – **तच्च यदेति** ।। उक्तमित्यन्तस्य तात्पर्यम् – **प्रागुक्तेति** ।। **अतिव्याप्तीति** ।। विष्णोरिवान्यस्यापि असङ्कुचितसर्वात्तृत्वस्य कालभेदेन वाच्यत्वादित्यर्थः । भाष्येऽत्तृत्वमदितेरिति प्रतिज्ञांशमनुवदति – **अदितेरेव तदत्तृत्वमिति** ।। प्रतीयत इत्यत्र हेत्वाकाङ्क्षायां सन्दिग्धश्रुतिलिङ्गं चादितिशब्दोऽदितित्वं चेति न्यायविवरणोक्तमाह –

**तददितेरितीति ।। सन्दिग्धपदोक्तं सावकाशत्वं श्रुतेराशङ्क्य लिङ्गेनोज्जीवयति – नचेति ।। उक्तेति ।।** आधिदैविकसर्वशब्दसमन्वयोक्तिपरान्तर्नयोक्तन्यायादित्यर्थः । तत्र सर्वदेवगतशब्दानां महायोगविद्वद्रूढिभ्यां हरौ मुख्यत्वस्योक्तत्वादिति भावः ।

'ಅದಿತೇ: ಪ್ರತೀಯತೇ' ಎಂಬುದರ ತಾತ್ಪರ್ಯವನ್ನು 'ತಚ್ಚ ಯದಾ' ಎಂಬುದರಿಂದ ಹೇಳುತ್ತಿದ್ದಾರೆ. 'ಉಕ್ತಂ' ಎಂಬಲ್ಲಿಯ ತನಕದ ಭಾಷ್ಯದ ತಾತ್ಪರ್ಯವನ್ನು 'ಪ್ರಾಗುಕ್ತ' ಎಂಬಲ್ಲಿಯ ತನಕ ಹೇಳಿದ್ದಾರೆ. 'ಅತಿವ್ಯಾಪ್ತಿ' ಎಂದು ಟೀಕೆಯಲ್ಲಿ ಇದೆ. ವಿಷ್ಣುವಿನಂತೆ ಬೇರೆಯವರಲ್ಲಿಯೂ ಅಸಂಕುಚಿತವಾದ ಸರ್ವಾತ್ತೃತ್ವವನ್ನು ಹೇಳಬಹುದಾದ್ದರಿಂದ ಅತಿವ್ಯಾಪ್ತಿ ಬರುತ್ತದೆಂದು ಅರ್ಥ. ಭಾಷ್ಯದಲ್ಲಿ 'ಅದಿತೇಃ ಅತ್ತೃತ್ವಂ' ಎಂದು ಪ್ರತಿಜ್ಞೆ ಮಾಡಿದ್ದಾರೆ. ಅದನ್ನೇ ಟೀಕೆಯಲ್ಲಿ 'ಅದಿತೇಃ ತದತ್ತೃತ್ವಂ' ಎಂಬುದಾಗಿ ಅನುವಾದ ಮಾಡುತ್ತಿದ್ದಾರೆ. 'ಪ್ರತೀಯತೇ' ಎಂದು ಹೇಳಿದಾಗ ಹೇತುವಿನ ಆಕಾಂಕ್ಷೆ ಬರುತ್ತದೆ. ಆವಾಗ ಸಾವಕಾಶವಾದ ಅದಿತಿಶ್ರುತಿ ಹಾಗೂ ಅದಿತಿತ್ವವೆಂಬ ಲಿಂಗಗಳು ಪೂರ್ವಪಕ್ಷ ಪ್ರಾಪಕವಾಗಿದೆಯೆಂಬುದಾಗಿ ನ್ಯಾಯವಿವರಣದಲ್ಲಿ ಹೇಳಿದ್ದನ್ನು 'ತದದಿತೇಃ' ಎಂಬುದರಿಂದ ನಿರೂಪಿಸುತ್ತಿದ್ದಾರೆ. 'ಸಂದಿಗ್ಧ' ಪದದಿಂದ ಸಾವಕಾಶತ್ವವನ್ನು ಅದಿತಿಶ್ರುತಿಗೆ ಆಶಂಕಿಸಿ ಲಿಂಗದಿಂದ ಆಕ್ಷೇಪವನ್ನು ಉಜ್ಜೀವಿಸುತ್ತಿದ್ದಾರೆ 'ನಚ' ಇತ್ಯಾದಿ ವಾಕ್ಯದಿಂದ. 'ಉಕ್ತನ್ಯಾಯ' ಎಂದರೆ ಆಧಿದೈವಿಕವಾದ ಸಕಲಶಬ್ದಗಳ ಸಮನ್ವಯ ಮಾಡುವ ಅಂತರಧಿಕರಣದಲ್ಲಿ ಹೇಳಲ್ಪಟ್ಟ ನ್ಯಾಯದಿಂದ ಎಂದರ್ಥ. ಅತರಧಿಕರಣದಲ್ಲಿ ಸಕಲ ದೇವತೆಗಳನ್ನು ಪ್ರತಿಪಾದಿಸುವ ಶಬ್ದಗಳನ್ನು ಮಾಹಾಯೋಗ ಮತ್ತು ವಿದ್ವದ್ರೂಢಿಯಿಂದ ಶ್ರೀಹರಿಯಲ್ಲಿ ಸಮನ್ವಯ ಮಾಡಿದ್ದಾರೆಂದು ಅಭಿಪ್ರಾಯ.

**भावदीपः – लिङ्गस्य निरवकाशत्वमाह – नहीति ।।** अदितित्वस्यादित्यसाधारणधर्मस्यादितिस्वभावत्वात् । तद्भिन्नस्य विष्णोः 'अनश्नन्' इति श्रुतेरत्तृत्वस्यायोगादित्यर्थः । उक्तमित्यन्तस्य तात्पर्यमाह – **अत इति ।।** विष्णुभिन्नस्यैवात्तृत्वादिति भावः । भाष्यस्थादिपदार्थमाह – **सोऽहमिति ।।** छान्दोग्ये तृतीयाध्याये दिङ्नामकचतुर्दिक्षु स्थितभगवद्बाहूनामित्यर्थः । 'सोऽहं वत्सं ततो जातं वायुं मुख्यप्राणं वेद जानामि' इति लक्ष्मीवाक्यम् । तद्भाष्योक्तमेव वचनं पठति – **यदाहुरिति ।।**

ಲಿಂಗವು ನಿರವಕಾಶವಾಗಿದೆಯೆಂಬುದನ್ನು 'ನಹಿ' ಇತ್ಯಾದಿ ವಾಕ್ಯದಿಂದ ಪ್ರತಿಪಾದಿಸುತ್ತಿದ್ದಾರೆ. ಅದಿತಿಯ ಅಸಾಧಾರಣ ಧರ್ಮವಾದ ಅದಿತಿತ್ವವು ವಿಷ್ಣುವಿನ ಸ್ವಭಾವವಾಗಿದೆ. ಇಂತಹ ಅದಿತಿಗಿಂತ ಭಿನ್ನನಾದ ವಿಷ್ಣುವಿನಲ್ಲಿ 'ಅನಶ್ನನ್' ಎಂಬ ಶ್ರುತಿಯಲ್ಲಿ ಹೇಳುವ ಅತ್ತೃತ್ವವು ಕೂಡುವುದಿಲ್ಲವೆಂದರ್ಥ. 'ಉಕ್ತಂ' ಎಂಬ ಭಾಷ್ಯದ ತಾತ್ಪರ್ಯವನ್ನು 'ಅತಃ' ಇತ್ಯಾದಿಯಾಗಿ ಹೇಳುತ್ತಿದ್ದಾರೆ. ವಿಷ್ಣುವಿಗಿಂತ ಭಿನ್ನರಾದವರಲ್ಲಿಯೇ ಅತ್ತೃತ್ವವು ಬರುತ್ತದೆಂದು ಅಭಿಪ್ರಾಯ. ಭಾಷ್ಯದಲ್ಲಿರುವ "ಆದಿ" ಪದದ ಅರ್ಥವನ್ನು 'ಸೋಽಹಂ'

ಇತ್ಯಾದಿಯಾಗಿ ಹೇಳುತ್ತಿದ್ದಾರೆ. ಛಾಂದೋಗ್ಯದ ಮೂರನೇ ಅಧ್ಯಾಯದಲ್ಲಿ 'ಸೋऽಹಂ' ಎಂಬ ಶ್ರುತಿಯು ಪ್ರಸಕ್ತವಾಗಿದೆ. ನಾಲ್ಕು ದಿಕ್ಕುಗಳಲ್ಲಿ ದಿಕ್ ಎಂಬ ಹೆಸರಿನಲ್ಲಿಯೇ ನೆಲೆಸಿರುವ ಭಗವಂತನ ಬಾಹುಗಳಿಗೆಯೆಂದರ್ಥ. ಅಂತಹ ನಾನು ಮಗುವಾದ ಮುಖ್ಯಪ್ರಾಣನನ್ನು ತಿಳಿಯುತ್ತೇನೆಂದು ಲಕ್ಷ್ಮೀದೇವಿ ಹೇಳುವ ಮಾತು. ಛಾಂದೋಗ್ಯದ ಮಾತನ್ನೇ 'ಯದಾಹುಃ' ಇತ್ಯಾದಿ ವಾಕ್ಯಗಳಿಂದ ಹೇಳುತ್ತಿದ್ದಾರೆ.

**भावदीपः** – 'यद् यद् ब्रह्माऽसृजद्' इति बृहद्भाष्यदिशा शङ्कते – **नन्विति** ।। इति योजनायामिति ।। परामर्शे समानविभक्त्यन्तपदेन प्रकृतत्वं तन्त्रमिति भ्रान्तस्य पूर्वपक्षिणो योजनायामित्यर्थः । 'मृत्युनैवेदमावृतमासीत्' 'अशनाया हि मृत्युः' इति पूर्वत्र मृत्युपदस्यापि अदित्यां प्रयोगे पुल्लिङ्गसमाधानमेवमेव ध्येयमिति भावेन प्रागदित्याख्यमृत्युरित्युक्तम् ।।

'ಯದ್ಯದ್ ಬ್ರಹ್ಮ ಅಸೃಜತ್' ಎಂಬ ಬೃಹದಾರಣ್ಯಕ ಭಾಷ್ಯದ ಪ್ರಕಾರ 'ನನು' ಇತ್ಯಾದಿಯಾಗಿ ಶಂಕಿಸುತ್ತಿದ್ದಾರೆ. 'ಇತಿ ಯೋಜನಾ' ಎಂದಿದೆ. ಅಂದರೆ ಪರಾಮರ್ಶ ಮಾಡಬೇಕಾದಾರೆ ಸಮಾನವಿಭಕ್ತ್ಯಂತವಾಗಿ ಪ್ರಕೃತವಾಗಿರಬೇಕೆಂದು ಭ್ರಾಂತನಾದ ಪೂರ್ವಪಕ್ಷಿಯು ಯೋಜಿಸಿದಾಗ ಎಂದು ತಿಳಿಯಬೇಕು. "ಮೃತ್ಯುನೈವೇದಮಾವೃತಮಾಸೀತ್ ಅಶನಾಯಾ ಹಿ ಮೃತ್ಯುಃ" ಎಂಬುದಾಗಿ ಹಿಂದಿನ ಶ್ರುತಿಯಲ್ಲಿ ಅದಿತಿಯಲ್ಲಿ ಮೃತ್ಯುಪದವು ಪ್ರಯುಕ್ತವಾಗಿದೆ. ಆದ್ದರಿಂದ ಪುಲ್ಲಿಂಗವಾದ 'ಸಃ' ಪದದಿಂದ ಅದಿತಿಯನ್ನು ಪರಾಮರ್ಶಿಸಬಹುದೆಂದು 'ಅದಿತ್ಯಾಖ್ಯಮೃತ್ಯುಃ' ಎಂದು ಹೇಳಿದ್ದಾರೆ.

**भावदीपः** – भाष्येऽनुक्तेः स्वयमाह – **विष्णुरेवेति** ।। तत्त्वित्यनुवृत्तस्यार्थोऽयम् ।। **अस्येति** ।। इदंपदस्य विपरिणामेनात्राप्यन्वयः । क्वचित्तु अथ यश्च भुवनस्येति पाठः । य इत्यनुवृत्तिः । साम्पराये मुक्तिप्रलययोः । स्पष्टार्थत्वाद्भाष्ये स्मृतेः पूर्वमुक्तिः । एतेन सर्वमत्तीति श्रुतं सर्वात्तृत्वलिङ्गं हरेरन्यत्रानवकाशमिति दर्शितम् ।

ಭಾಷ್ಯದಲ್ಲಿ 'ವಿಷ್ಣುರೇವ' ಎಂದು ಹೇಳದ ಕಾರಣ ಸ್ವತಃ ಟೀಕಾಕಾರರೇ "ವಿಷ್ಣುರೇವ" ಎಂದು ಹೇಳುತ್ತಿದ್ದಾರೆ. ಅನುವೃತ್ತವಾದ 'ತತು' ಪದದ ಅರ್ಥವಾಗಿದೆ. 'ಅಸ್ಯ' ಎಂದರೆ 'ಇದಂ' ಪದವನ್ನು ಷಷ್ಠ್ಯಂತ್ಯವಾಗಿ ವಿಪರಿಣಾಮ ಮಾಡಿಕೊಂಡು ಅನ್ವಯ ಮಾಡಬೇಕೆಂದು ತಿಳಿಯಬೇಕು. ಕೆಲವು ಪುಸ್ತಕಗಳಲ್ಲಿ 'ಅಥ ಯಶ್ಚ ಭುವನಸ್ಯ' ಎಂಬ ಪಾಠವಿದೆ. ಶ್ರುತಿಯಲ್ಲಿ 'ಯಃ' ಎಂಬುದನ್ನು ಅನುವೃತ್ತಿ ಮಾಡಿಕೊಳ್ಳಬೇಕು. 'ಸಾಂಪರಾಯೇ' ಎಂಬ ಪದಕ್ಕೆ ಮುಕ್ತಿ ಹಾಗೂ ಪ್ರಳಯಕಾಲದಲ್ಲಿ ಎಂದರ್ಥ. ಸ್ಮೃತಿಯ ಅರ್ಥವು ಸ್ಪಷ್ಟವಾಗಿರುವುದರಿಂದ ಹಾಗೂ ಸುಲಭವಾಗಿ ತಿಳಿಯುವುದರಿಂದ ಭಾಷ್ಯದಲ್ಲಿ ಸ್ಮೃತಿಯನ್ನೇ ಮೊದಲು ಹೇಳಿದ್ದಾರೆ. ಇದರಿಂದ 'ಸರ್ವಂ ಅತ್ತಿ' ಎಂಬ ಸ್ಮೃತಿಯಿಂದ ಕೇಳಿಸುತ್ತಿರುವ ಸರ್ವಾತ್ತೃತ್ವವು ವಿಷ್ಣುವಿನಲ್ಲಿ ನಿರವಕಾಶವಾಗಿದೆಯೆಂದು ಹೇಳಿದಂತಾಯಿತು.

**भावदीपः** – सन्दिग्धश्रुतिलिङ्गाभ्यां निश्चितलिङ्गप्रकरणयोरेव बलवत्त्वमिति न्यायविवरणवाक्यं भाष्ये सङ्गमयितुं तद्व्यावर्त्य शङ्कमाह – **नचेति** ।। **विष्णावपीति** ।। 'या प्राणेन संविशत्यदितिर्देवतामयी' इति काठकादौ प्रयोगादिति भावः । अदितिशब्दवाच्यत्वमदितिशब्दप्रवृत्तिनिमित्तम् अदनकर्तृत्वरूपमदिति-त्वमिहाभिप्रेतं तद्विष्णावपि युक्तम् । 'स्रष्टा पाता तथैवात्ता' इति स्मृतेः । अनशनश्रुतिगतेस्तूत्तरनये वक्ष्यमाणत्वादिति भावः ।। ९ ।।

'ಸಂದಿಗ್ಧಶ್ರುತಿಲಿಂಗಾಭ್ಯಾಂ ನಿಶ್ಚಿತಲಿಂಗಪ್ರಕರಣಯೋರೇವ ಬಲವತ್ತ್ವಂ' ಎಂಬ ನ್ಯಾಯವಿವರಣವಾಕ್ಯವನ್ನು ಭಾಷ್ಯದ ಜೊತೆ ಹೊಂದಿಸಲು ನ್ಯಾಯವಿವರಣದ ಮಾತಿನಿಂದ ನಿರಾಕೃತವಾಗುವ ಶಂಕೆಯನ್ನು 'ನಚ' ಇತ್ಯಾದಿ ವಾಕ್ಯಗಳಿಂದ ತೋರಿಸುತ್ತಿದ್ದಾರೆ. 'ವಿಷ್ಣಾವಪಿ' ಎಂಬುದರ ಅರ್ಥ ಹೀಗಿದೆ - 'ಯಾ ಪ್ರಾಣೇನ ಸಂವಿಶತ್ಯದಿತಿರ್ದೇವತಾಮಯಿ' ಎಂದು ಕಾಠಕದಲ್ಲಿ ಪ್ರಯೋಗಿಸಲಾಗಿದೆ. ಈ ವಾಕ್ಯದಿಂದ ಅದಿತಿಶಬ್ದದ ವಾಚ್ಯತ್ವವನ್ನು ಅದಿತಿಶಬ್ದ ಪ್ರವೃತ್ತಿಗಾಗಿ ಮತ್ತು ಅದನಕರ್ತೃತ್ವರೂಪವಾದ ಅದಿತಿತ್ವವನ್ನು ಇಲ್ಲಿ ವಿವಕ್ಷಿಸಲಾಗಿದೆ. ಇದು ವಿಷ್ಣುವಿನಲ್ಲಿಯೂ ಸಹ ಯುಕ್ತವಾಗುತ್ತದೆಂದು ತಿಳಿಯಬೇಕು. 'ಸ್ರಷ್ಟಾ ಪಾತಾ ತಥೈವಾತ್ತಾ' ಎಂಬ ಸ್ಮೃತಿಯ ಆಧಾರದಿಂದ ಅನಶನಶ್ರುತಿಗೆ ಮುಂದಿನ ಅಧಿಕರಣದಲ್ಲಿ ಗತಿಯನ್ನು ಹೇಳಲಾಗುತ್ತದೆ. ಆದ್ದರಿಂದ ಅದರ ವಿರೋಧಕ್ಕೂ ಅವಕಾಶವಿಲ್ಲ.

## अथ श्रीशर्कराश्रीनिवासविचचिता वाक्यार्थमञ्जर्याम्

**वाक्यार्थमञ्जरी** – अत्तुं भक्षणार्थम् । अध्रियत दधार । आदच्चेति शेषोक्तिः अभक्षयदित्यर्थः । कुत इति प्रश्नोत्तरमाह – **सर्वमिति** ।। अदितित्वम् अदितिशब्दवाच्यत्वं हि यस्मादतः सा सर्वात्त्रीत्यर्थः । अन्यथा सर्वात्तृत्वाभावे तद् अदितित्वम् अदितेः देवमातुः उक्तन्यायाद् अन्तर्यामिपरत्वादिरूपात् । अदितिस्वरूपत्वं त्वप्रत्ययस्य व्यत्ययभेदेन जातिपरत्वायोगे आकाशत्वमित्यादाविव स्वरूपपरत्वस्यैव वक्तव्यत्वादिति भावः ।। **बाध इति** ।। वक्ष्यमाणरीत्या लिङ्गस्यापि सावकाशत्वादिति भावः । पुंशक्तिः पुरुषशक्तिः ।। **सोऽहमिति** ।। सोऽहं दिशां दिङ्नामक-चतुर्दिगवस्थितभगवद्रूपाणां वत्सं पुत्रं वायुमेव उक्तरीत्या वेदेति रमावाक्यम् । आहुः छान्दोग्यभाष्ये – **प्रकृतेति** ।। स संवत्सरोऽभवदिति संवत्सरशब्देन प्रकृतचतुर्मुखपरमार्शादित्यर्थः । तृतीयान्ततया तृतीयान्ततेनेति शब्देन प्रथमान्तस इत्यनेन इति योजनायाम् ।। **अस्ति चोद्यावकाश इति** ।। यद्यपि बृहद्भाष्ये 'स

यद्यदेव' इत्यत्र स इत्यस्य संवत्सराख्यचतुर्मुखपरत्वमेवोक्तम् । तथापि समानविभक्तिकत्वं परमार्शे तन्त्रमिति भ्रमेण स इत्यनेनादिपर परामर्श इति पूर्वपक्षे पुल्लिङ्गानुपपत्तिचोद्यावकाशोऽस्तीति भावः । अत एवेति योजनायामित्युक्तम् ।।

**ॐ अत्ता चराचरग्रहणात् ॐ** ।। सर्वं वाऽत्तीत्यत्रोक्तोऽत्ता संहर्ता विष्णुरेव । नादितिः सर्वमिति चेतनाचेतन जातस्य भक्ष्यतया ग्रहणादभिधानादिति यावत् ।। **विसंवादेति** ।। श्रुतौ चराचरेत्यश्रवणादिति भावः । अस्य व्याख्यानस्य व्याहतिं परिहरति – **अस्वातन्त्र्येणेति** ।। आयुर्स्थे आयुष्यार्थम् उक्तरीत्येति 'स्रष्टा पाता' इति भाष्योक्तरीत्या सावकाशत्वादिति 'या प्राणेन संविशत्यदितिर्देवतामयी' इति तत्रापि प्रयोगादिति भावः ।। **अदिति शब्दवाच्यत्वमिति** ।। पाचकत्वमित्यादाविवाद नक्रियाकर्तृत्वमेवादितित्वं तद्धितभावाश्च शब्दप्रवृत्तिनिमित्तमिति भावः ।।२ ।।

## ಬ್ರಹ್ಮಮೀಮಾಂಸಾಶಾಸ್ತ್ರ

## ವಿಷ್ಣು ಪ್ರಕರಣವಾದ್ದರಿಂದಲೂ ವಿಷ್ಣುವೇ ಸಂಹಾರಕ

**।। ॐ प्रकरणाच्च ॐ ।।**

ಅನುವಾದ - ''ನೈವೇಹ ಕಿಂಚನ '' ಇತ್ಯಾದಿಯಾಗಿ ವಿಷ್ಣುಪ್ರಕರಣದ ಬಲದಿಂದಲೂ ವಿಷ್ಣುವೇ ''ಸರ್ವಸಂಹಾರಕರ್ತಾ'' ಎಂದು ನಿರ್ಣಯವಾಗುತ್ತದೆ.

ಶ್ರೀಜಗನ್ನಾಥಯತಿಗಳಿಂದ ರಚಿಸಲ್ಪಟ್ಟ

## ಸೂತ್ರದೀಪಿಕಾ

**सूत्रदीपिका** – ''नैवह किञ्चन'' इति विष्णुप्रकरण बलाच्च विष्णुरेव अत्त इत्यर्थः ।।

''ನೈವೇಹ ಕಿಂಚನ'' ಎಂಬ ವಿಷ್ಣು ಪ್ರಕರಣದ ಬಲದಿಂದ ವಿಷ್ಣುವೇ ಸಂಹಾರಕರ್ತಾ ಎನಿಸಿದ್ದಾನೆ,

सूत्रभाष्यम्

॥ ॐ प्रकरणाच्च ॐ ॥ १० ॥

भाष्यम् – अप्संवत्सरसृष्ट्यादिना तत्प्रकरणाच्च ।

ಅನುವಾದ - ಈ ಪ್ರಕರಣದಲ್ಲಿ ನೀರಿನ ಸೃಷ್ಟಿಯನ್ನು ಹಾಗೂ ಸಂವತ್ಸರನೆಂಬ ಚತುರ್ಮುಖನ ಸೃಷ್ಟಿಯನ್ನು ಹೇಳಲಾಗಿದೆ. ಆದ್ದರಿಂದ ಇದು ವಿಷ್ಣುವಿನ ಪ್ರಕರಣವೇ ಆಗಿದೆ. ಈ ಕಾರಣದಿಂದಲೂ ಸಂಹಾರಕರ್ತೃವೆಂದು ಪ್ರತಿಪಾದ್ಯನಾದವನು ವಿಷ್ಣುವೇ ಆಗುತ್ತಾನೆ. ಬ್ರಹ್ಮವೈವರ್ತ ಪುರಾಣದಲ್ಲಿ ನೀರು ಮೊದಲಾದವುಗಳನ್ನು ಸೃಷ್ಟಿಮಾಡಿದವನು ವಿಷ್ಣುವೆಂದು ಸ್ಪಷ್ಟಪಡಿಸಲಾಗಿದೆ.

ಪ್ರತಿಪದಾರ್ಥ - ಪ್ರಕರಣವು ವಿಷ್ಣುಪರವೇ ಆಗಿದೆ ಎಂಬುದನ್ನು ಪ್ರತಿಪಾದಿಸುತ್ತಿದ್ದಾರೆ. ಅಪ್ = ನೀರು, ಸಂವತ್ಸರ = ಸಂವತ್ಸರ ನಾಮಕನಾದ ಚತುರ್ಮುಖನು ಇವುಗಳ, ಸೃಷ್ಟ್ಯಾದಿನಾ = ಸೃಷ್ಟ್ಯಾದಿಗಳನ್ನು ಹೇಳಿರುವುದರಿಂದ, ತತ್ = ಆ ವಿಷ್ಣುವಿನ, ಪ್ರಕರಣಾಚ್ಚ = ಪ್ರಕರಣವಾಗಿರುವುದರಿಂದಲೂ, ಭಗವಂತನೇ ಅತ್ತೃತ್ವವುಳ್ಳವನಾಗಿದ್ದಾನೆ.(१)

---

(१) भाष्यदीपिका – यदा निरवकाशसर्वात्तृत्वलिङ्गमात्रात् सावकाशादितिश्रुत्यदितित्व-लिङ्गयोर्बाधेनात्ता विष्णुरेवेति सिद्ध्यति । तदा किमु वाच्यं निरवकाशप्रकरण-समुचिताल्लिङ्गादित्यर्थं प्रतिपादयत्सूत्रं पठित्वा व्याचष्टे – प्रकरणाच्चेति ।।'नैवेह किञ्चन' (बृ.३-२) इति निरवकाशविष्णुप्रकरणबलाच्चात्ता विष्णुरेवेति सूत्रार्थः ।।

अप्संवत्सरसृष्ट्यादिना तत्प्रकरणत्वाच्च ।

प्रकरणस्य वैष्णवत्वासिद्धिमाशङ्क्याऽह – अप्संवत्सरसृष्ट्यादिनेति ।। अप्सृष्टिः संवत्सरनामकचतुर्मुखसृष्टिश्च ते आदी यस्य तत् तथोक्तम् । आदिपदेन संवत्सरादनोद्यमादिलिङ्गं गृह्यते । 'तत्प्रकरणत्वात्' विष्णुप्रकरणत्वादित्यर्थः । एतत्प्रकरणस्येति शेषः । अवगमोपलक्षकमेतत् । अस्यातः प्रकरणाद् विष्णुरेवा-त्रोच्यते इति प्रकृतसाध्येनान्वयः । चो हेतुसमुच्चये । प्रकरणं नामैकप्रमेय-प्रतिपादकानेकवाक्यानि ।।

बृहदारण्यके हि – 'नैवेह किञ्चनाग्र आसीत् । मृत्युनैवेदमावृतमासीत् । अशनाययाऽशनाया हि मृत्युस्तन्मनोऽकुरुताऽत्मन्वी स्यामिति ।। सोऽर्चन्नचरत् तस्यार्चत आपोऽजायन्त । तद्यदपां शर आसीत् तत्समहन्यत सा पृथिव्यभवत् तस्यामश्राम्यत । सोऽकामयत द्वितीयो म आत्मा जायेतेति स मनसा वाचा मिथुनं समभवदशनाया हि मृत्युस्तद्रेत आसीत् तत्

भाष्यम् –

**'नेहाऽसीत् किञ्चनाप्यादौ मृत्युरासीद्धरिस्तदा ।**
**सोऽत्मनो मनसाऽस्राक्षीदप एव जनार्दनः ॥**

---

संवत्सरोऽभवत् । .... तं जातमभिव्याददात् स भाणमकरोत् सैव वागभवत् स ऐक्षत यदि ह वा इममभिमंस्ये कनीयोऽन्नं करिष्य इति । स तया वाचा तेनाऽत्मना इदं सर्वमसृजत' (बृ. १-२.) इति विष्णुविषयाण्यनेकवाक्यानि श्रूयन्ते । 'अग्रे' प्रलये 'इह' अस्वतन्त्रवर्गे, गगन इति वा । 'किञ्चन' जीवजडरूपं वस्तु नैवाऽसीदिति ॥

ननु – 'सर्वसंहारकं विष्णुं देवीं जीवांस्तथैव च ।
कालं त्रिगुणसाम्यं च कर्माणि प्राणमिन्द्रियम् ।
संस्कारं चैव वेदांश्च नर्ते किञ्चिल्लये त्वभूत् ॥'

इति बृहद्भाष्योदाहृतवचनान्नित्यानां जीवानामपि सत्त्वात् कथमियमुक्तिरित्यत उक्तं – **मृत्युनैवेति** ॥ 'इदं' जीवादिकं 'मृत्युना' तन्नामकेन जनार्दनेन 'आवृतम्' आच्छादितमासीत् । मृत्योरावरकत्वे हेतुः – **अशनाययेति** ॥ अशं जगत् तन्नेत्र्येत्यर्थः । मृत्योरशनायात्वं श्रुतिप्रसिद्धमित्याह – **अशनाया हीति** ॥'तत्' तस्मादेकाकित्वान्मृत्युः 'आत्मन्वी' जगद्रूपशरीरवान् स्यामित्यैच्छत् । एवं स मृत्युः 'अर्चन्' स्वात्मानं पूजयन् सञ्चचार तस्यार्चत आपोऽजायन्त । ता एव तासामर्चनसाधनमिति भावः ।

तत्राप्सु योऽपां 'शरः' फेनरूपो मण्ड आसीत् तच्छरः । स शरो मृत्युना स्वरेतसा 'समहन्यत' सङ्घातत्वं प्रापितः । यः सङ्घातः सा 'पृथिवी' ब्रह्माण्डरूपाऽभवत् 'तस्यां' पृथिव्यां श्वेतद्वीपे 'अश्राम्यत्' शिश्ये मृत्युः । स मृत्युः 'मे' मम 'आत्मा' ब्रह्मा द्वितीयो वाय्वपेक्षया जायेतेति अकामयत । अथ 'अशनाया' स मृत्युः 'मनसा' स्वेच्छया 'वाचा' वेदाभिमानिन्श्रिया 'मिथुनं' द्वन्द्वीभावं 'समभवत्' प्रापत् । तेन मिथुनीभावेन यद्रेत आसीत् 'तत्संवत्सरः' तदुपादानकदेहवान् संवत्सरनामकश्चतुर्मुखोऽभवत् । अथ जातं संवत्सरमभिलक्ष्यात्तुं 'व्याददात्' विददार स्वमुखं मृत्युः । स संवत्सरो भयाद् विष्णुदीस्याऽऽनन्दबोधकभाणिति शब्दमकरोत् । यद् भाणितिवचस्तदभिमानिनी सैव वाङ्नाम्नी सरस्वत्यभवत् । स मृत्युः 'ऐक्षत' आलोचितवान् । किमिति ? 'यदीमं' संवत्सरम् 'अभिमंस्ये' लीनं करिष्ये तत् तदा मे 'कनीयः' अल्पमन्नं करिष्ये । ततो बह्वन्नं भवत्वित्यालोच्य स मृत्युः 'तया वाचा' सरस्वत्या 'तेनाऽत्मना' चतुर्मुखेनेदं सर्वमसृजत । जनयामासेति श्रुत्यर्थः ॥

शयानस्तासु भगवान् निर्ममेऽण्डं महत्तरम् ।
तत्र संवत्सरं नाम ब्रह्माणमसृजत् प्रभुः ॥
तमत्तुं व्याददादास्यं तदाऽसौ विरुराव ह ।
अथ तत्कृपया विष्णुः सृष्टिकर्मण्ययोजयत् ॥
सोऽसृजद् भुवनं विश्वमद्यार्थं हरये विभुः ॥'
इति ब्रह्मवैवर्ते ॥ १० ॥

॥ इति अत्तृत्वाधिकरणम् ॥ २ ॥

ಅನುವಾದ - ತನ್ನ ಇಚ್ಛೆಯಿಂದ ಅವನು ಮೊದಲು ನೀರನ್ನು ಸೃಷ್ಟಿಸಿದನು. ಮಲಗಿಕೊಂಡ ಅವನು ವಿಸ್ತಾರವಾದ ಬ್ರಹ್ಮಾಂಡವನ್ನೂ ಸಹ ನಿರ್ಮಾಣ ಮಾಡಿದನು. ಬ್ರಹ್ಮಾಂಡದಲ್ಲಿ ಸಂವತ್ಸರನಾಮಕ ಚತುರ್ಮುಖಬ್ರಹ್ಮನನ್ನು ಸೃಷ್ಟಿಮಾಡಿ ಅವನನ್ನು ತಿನ್ನಲು ಬಾಯಿಯನ್ನು ತೆಗೆದನು. ಆಗ ಚತುರ್ಮುಖಬ್ರಹ್ಮನು ಅಳುತ್ತಾ ಪ್ರಾರ್ಥಿಸಿದನು. ದಯಾಮೂರ್ತಿಯಾದ ಶ್ರೀಹರಿಯು ಅವನನ್ನು ಸೃಷ್ಟಿಕಾರ್ಯದಲ್ಲಿ ತೊಡಗಿಸಿದನು. ಅನಂತರ ಭಗವಂತನ ಆಹಾರರೂಪವಾಗಿ ಚತುರ್ಮುಖನು ಹದಿನಾಲ್ಕು ಲೋಕಗಳನ್ನು ಸೃಷ್ಟಿಮಾಡಿದನು.

ಪ್ರತಿಪದಾರ್ಥ - ಈ ವಿಷಯವು ಬ್ರಹ್ಮವೈವರ್ತಪುರಾಣದಲ್ಲಿ ಹೇಳಲ್ಪಟ್ಟಿದೆ. ಆದೌ = ಜಗತ್ತಿನ ಮೊದಲು, ಕಿಂಚನ = ಯಾವ ಪದಾರ್ಥವೂ ಸಹ, ಇಹ = ಇಲ್ಲಿ, ನಾಸೀತ್ = ಇರಲಿಲ್ಲ, ತದಾ = ಆವಾಗ, ಮೃತ್ಯುಃ = ಮೃತ್ಯುನಾಮಕನಾದ, ಹರಿಃ = ಶ್ರೀಹರಿಯು ಮಾತ್ರ, ಆಸೀತ್ = ಇದ್ದನು, ಸಃ = ಅವನೇ ಜನಾರ್ದನಃ = ಜನಾರ್ದನನು, ಆತ್ಮನಃ = ತನ್ನ, ಮನಸಾ = ಅಭಿಲಾಷೆಯಿಂದ, ಆಪಃ = ನೀರನ್ನು, ಅಸ್ರಾಕ್ಷೀತ್ = ಸೃಷ್ಟಿಸಿದನು, ತಾಸು = ಅಂತಹ ನೀರಿನಲ್ಲಿ, ಶಯಾನಃ = ಮಲಗಿರುವವನಾಗಿ, ಭಗವಾನ್ = ಷಡ್ಗುಣೈಶ್ವರ್ಯ ಸಂಪನ್ನಾಗಿರುವುದರಿಂದಲೇ, ಮಹತ್ತರಮ್ = ಅಗಾಧವಾದ, ಅಂಡಂ = ಬ್ರಹ್ಮಾಂಡವನ್ನು, ನಿರ್ಮಮೇ = ನಿರ್ಮಾಣ ಮಾಡಿದನು.

ತತ್ರ = ಆ ಬ್ರಹ್ಮಾಂಡದಲ್ಲಿ, ಸಂವತ್ಸರಂ = ಸಂವತ್ಸರನೆಂಬ ಬ್ರಹ್ಮಾಣಂ = ಚತುರ್ಮುಖ ಬ್ರಹ್ಮನನ್ನು, ಪ್ರಭುಃ = ಸಮರ್ಥನಾದ ಶ್ರೀಹರಿಯು, ಅಸೃಜತ್ = ಸೃಷ್ಟಿಮಾಡಿದನು. ತಂ = ಆ ಚತುರ್ಮುಖನನ್ನು, ಅತ್ತುಂ = ತಿನ್ನಲು, ಆಸ್ಯಂ = ಮುಖವನ್ನು, ವ್ಯಾದದಾತ್ = ತೆರೆದನು, ತದಾ = ಆವಾಗ, ಅಸೌ = ಈ

सम्भवन्नपकर्षो न कल्प्येत विध्यानर्थक्यं हि तं प्रति'' इति सूत्रे बाधकाभावेऽपकर्षणं नेत्येतदिति भावः ।

अवान्तरेति श्लोकं व्याचष्टे – **अभिक्रमणस्येति** । ''समानयत उपभृतः'' इति पूर्वं ''यो वै प्रयाजानां मिथुनं'' इति पश्चाच्च प्रयाजविषयैर्वाक्यैरित्यर्थः ।

ಪೂಷಾದಿವಚ್ಚ ನಾತ್ರಾಸ್ತಿ ಬಾಧೋ ಯೇನಾಪಕರ್ಷಣಮ್ ॥

ಎಂಬ ಅರ್ಧಶ್ಲೋಕವನ್ನು 'ನಚಾಬಾಧೇಪಿ' ಎಂಬ ವಾಕ್ಯದಿಂದ ವ್ಯಾಖ್ಯಾನಿಸುತ್ತಿದ್ದಾರೆ. ಹಿಂದೆ ಹೇಳಿದಂತೆ ಶ್ರುತಿ ಹಾಗೂ ಲಿಂಗಗಳು ಸಾವಕಾಶವಾದ್ದರಿಂದ ಬಾಧಕಗಳಾಗುವುದಿಲ್ಲವೆಂದು ತಿಳಿಯಬೇಕು. ಬಾಧಕವಿಲ್ಲದಿದ್ದಾಗ ಅಪಕರ್ಷವನ್ನು ಮಾಡಬಾರದೆಂದು ಪೂರ್ವಮೀಮಾಂಸೆಯಲ್ಲಿ ನಿರ್ಣಯಿಸಿದ್ದಾರೆ. ಅರ್ಥವಾದಾಧಿಕರಣದಲ್ಲಿರುವ ''ಪ್ರಕರಣೇ ಚ ಸಂಭವನ್ನಪಕರ್ಷೋ ನ ಕಲ್ಪ್ಯೇತ ವಿಧ್ಯಾನರ್ಥಕ್ಯಂ ಹಿ ತಂ ಪ್ರತಿ'' ಎಂಬ ಸೂತ್ರದಲ್ಲಿ ಬಾಧಕವಿಲ್ಲದಾಗ ಅಪಕರ್ಷ ಮಾಡಬಾರದೆಂದು ಸಿದ್ಧಾಂತ ಮಾಡಿದ್ದಾರೆ.

ಅವಾಂತರಪ್ರಕ್ರಿಯಾ ತು ಸಂದಂಶಾತ್ಕಲ್ಪ್ಯತೇ ಸ ಚ ।

ಅಭಿಕ್ರಾಮನ್ ಜುಹೋತೀತಿ ವಾಕ್ಯೇऽಸ್ತಿ ಪ್ರಕೃತೇ ತು ನ ॥

ಎಂಬ ಶ್ಲೋಕವನ್ನು ಅಭಿಕ್ರಮಣಸ್ಯ ಎಂಬುದರಿಂದ ವ್ಯಾಖ್ಯಾನಿಸುತ್ತಿದ್ದಾರೆ. ''ಸಮಾನಯತ ಉಪಭೃತಃ'' ಎಂದು ಹಿಂದೆ, ''ಯೋ ವೈ ಪ್ರಯಾಜಾನಾಂ ಮಿಥುನಂ'' ಎಂದು ಮುಂದೆ ಪ್ರಯಾಜವಿಷಯಕವಾದ ವಾಕ್ಯಗಳಿಂದ ಅಭಿಕ್ರಮಣವು ಸಂದಷ್ಟವಾಗಿದೆಯೆಂದು ತಿಳಿಯಬೇಕು.

**प्रकाशः** – यदपि यद्वाऽदितिश्रुतिबलादित्यादि, तन्न, प्रकरणस्य निरवकाशत्वादित्याह – **अदितेरिति** । टीकाप्रमेयं न्यायविवरणमूलमिति भावेनाह – **तदेतदिति** । **सन्दिग्धेति** । 'सन्दिग्धत्वनिश्चितत्वे' सावकाशत्वनिरवकाशत्वे ।

प्रकरणाल्लिङ्गस्य बलवत्त्वात् सूत्रक्रम इत्याह – **अत्रचेति** ।।

ಹಿಂದೆ ಪೂರ್ವಪಕ್ಷ ಮಾಡುವಾಗ ಅದಿತಿಶ್ರುತಿ ಬಲದಿಂದ ಅದಿತಿಯೇ ವಾಚ್ಯಳೆಂದು ಆಕ್ಷೇಪಿಸಿದ್ದರು. ಇದು ತಪ್ಪು. ಸಾವಕಾಶವಾದ ಅದಿತಿಶ್ರುತಿಗಿಂತ ನಿರವಕಾಶವಾದ ಪ್ರಕರಣವು ಬಲಿಷ್ಠವೆಂದು 'ಅದಿತೇರೇವ' ಎಂಬುದರಿಂದ ಸಮರ್ಥಿಸುತ್ತಿದ್ದಾರೆ. ಟೀಕೆಯಲ್ಲಿ ನಿರೂಪಿಸಿದ ಪ್ರಮೇಯಕ್ಕೆ ನ್ಯಾಯವಿವರಣವೇ ಮೂಲವಾಗಿದೆ ಎಂಬ ಅಭಿಪ್ರಾಯದಿಂದ 'ತದೇತದ್' ಎಂಬ ವಾಕ್ಯವು ಹೊರಟಿದೆ. ಗ್ರಂಥದಲ್ಲಿ 'ಸಂದಿಗ್ಧಶ್ರುತಿಲಿಂಗಾಭ್ಯಾಂ' ಎಂದು ಹೇಳಿದ್ದಾರೆ. ಇಲ್ಲಿರುವ 'ಸಂದಿಗ್ಧ' ಪದಕ್ಕೆ 'ಸಾವಕಾಶ' ಎಂದರ್ಥ. 'ನಿಶ್ಚಿತ' ಎಂಬ ಪದಕ್ಕೆ 'ನಿರವಕಾಶ' ಎಂದರ್ಥ.

ಪ್ರಕರಣಪ್ರಮಾಣಕ್ಕಿಂತ ಲಿಂಗಪ್ರಮಾಣವು ಬಲಿಷ್ಠವಾದ್ದರಿಂದ ಸೂತ್ರಗಳ ವಿನ್ಯಾಸವು ಸಾಧುವಾಗಿದೆಯೆಂದು 'ಅತ್ರಚ' ಎಂಬ ವಾಕ್ಯದಿಂದ ಪ್ರತಿಪಾದಿಸುತ್ತಿದ್ದಾರೆ.

ಅತ್ತೃತ್ವಾಧಿಕರಣ (೧-೨-೨)

गुरुराजीयम् – एवमन्वाख्यानपक्षमेवाङ्गीकृत्य सर्वं वा अत्तीत्यनेन सर्वात्तृत्वरूपमदितिशब्दप्रवृत्तिनिमित्तमेवोच्यत इत्युपपादितम् । इदानीं तु हेतुपरत्वेऽपि व्याचष्टे – किञ्चेत्यादिना ॥

ननु पूर्ववाक्येऽदितिशब्दस्याप्रयुक्तत्वेऽप्यनुशासनं युज्यते । अदितिर्देवतामयीत्यादौ स्थलान्तरे प्रयुक्तस्यादितिशब्दस्य निर्वचनं क्रियत इति किं न स्यादित्यत आह – नचेति ॥

किञ्चादितिशब्दस्य प्रसिद्धादितिपरत्वे सर्वं वा अत्तीति सर्वशब्दोऽनुपपन्नः । नचात्रोक्तश्रुतौ सर्वशब्दस्त्वदित्यदनयोग्यसर्वपर इति तत्राह – एवञ्चेति ॥ किञ्च मृत्युनैवेदमावृतमासीदित्यादिनाऽस्य प्रकरणस्य वैष्णवत्वादितिशब्दस्य प्रसिद्धार्थत्वे प्रकरणविरोधः । नच दर्शपूर्णमासप्रकरणात् पूषाप्रविष्ट भाग इत्युक्तस्य पौष्णपेषणस्येव विष्णुप्रकरणात्तददितेरदितित्व-मित्यस्याप्युत्कर्षोऽस्त्वित्यतो वैषम्येण परिहरति – नचेति ॥ दृष्टान्ते तु बाधकसद्भावादुत्कर्ष इति भावः ।

नन्वभिक्रामं जुहोतीति दर्शपूर्णमासप्रकरणे श्रुतस्याभिक्रमणस्यैतदङ्ग-प्रयाजान्वयार्थं प्रयाजस्यावान्तरप्रकरणमिव विष्णुप्रकरणेऽदितेरावान्तरप्रकरणं किं न स्यादित्यत आह – अभिक्रमणस्येति॥ अदितिश्रुतिबालञ्चैवेत्यादिप्रकरणम पि अदितेरेवेत्यन्तिमपूर्वपक्षं निराकरोति – अदितेरिति ॥ छ ॥

॥ इति श्रीकेशवभट्टारकेण विरचितायां भावदीपिकायां
अत्तृत्वाधिकरणम् सम्पूर्णम् ॥ ॥




'ಸಃ ಯದ್ಯದೇವಾಽಸೃಜತ' ಎಂಬುವ ಮೊದಲು ವಿಷ್ಣುವನ್ನು ಸರ್ವಾತ್ತಾ ಎನ್ನಲಾಗಿದೆ. ಏಕೆ? ಎಂಬ ಪ್ರಶ್ನೆ ಬಂದರೆ 'ಸರ್ವಂ ವಾ ಅತ್ತಿ' ಎಂಬುದಾಗಿ ಅದಿತಿಶಬ್ದದ ನಿರ್ವಚನದ ಮೂಲಕವಾಗಿ ಹೇತುವನ್ನು ನಿರೂಪಿಸಲಾಗಿದೆ. ಒಂದು ವೇಳೆ ಹಿಂದಿನ ವಾಕ್ಯದಲ್ಲಿ ವಿಷ್ಣುವಿನಲ್ಲಿ ಅಥವಾ ಅದಿತಿದೇವಿಯಲ್ಲಿ ಆ ಅದಿತಿಶಬ್ದವನ್ನು ಪ್ರಯೋಗಿಸಿದ್ದರೆ ಅನುಶಾಸನದ ಆಕಾಂಕ್ಷೆ ಬರುತ್ತಿತ್ತು. ಆದರೆ ಮೊದಲು ಅದಿತಿಶಬ್ದವನ್ನು ಪ್ರಯೋಗಿಸದ ಕಾರಣ ಅನುಶಾಸನದ ಆಕಾಂಕ್ಷೆಯು ಬರುವುದಿಲ್ಲ.

ಮೊದಲನೆಯ ಸೂತ್ರದಲ್ಲಿ ಸರ್ವಾತ್ತೃತ್ವವೆಂಬ ಲಿಂಗವು ಹೇಳಲ್ಪಟ್ಟಿದೆ. ಎರಡನೆಯ ಸೂತ್ರದಲ್ಲಿ ಪ್ರಕರಣಪ್ರಮಾಣವು ಹೇಳಲ್ಪಟ್ಟಿದೆ. ಪ್ರಕರಣಕ್ಕಿಂತ ಲಿಂಗವು ಶ್ರೇಷ್ಠವಾದ್ದರಿಂದ ಸೂತ್ರಕ್ರಮವು ಸ್ಪಷ್ಟವಾಗಿಯೇ ಇದೆ.




## ಅದ್ವೈತಿಗಳ ಅಧಿಕರಣ ಶರೀರ

### तात्पर्यचन्द्रिका

**अत्र परैरुक्तं –**

**यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः ।**
**मृत्युर्यस्योपसेचनं ................. ।।**[१]

(१)**शङ्करभाष्यम्** – जीवोऽग्निरीशो वात्ता स्यादोदने जीव इष्यताम् ।
स्वाद्वत्तीति श्रुतेर्वह्निर्वाग्निरन्नाद इत्यदः ।।
ब्रह्मक्षत्रादिजगतो भोज्यत्वात् स्यादिहेश्वरः ।
ईशप्रश्नोत्तरत्वाच्च संहारस्तस्य चात्तृता ।।

कठवल्लीषु पठ्यते 'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः' इति । अत्र कश्चिदोदनोपसेचनसूचितोऽत्ताा प्रतीयते । तत्र किमग्निरत्ता स्यात्, उत जीवः, अथवा परमात्मेति संशयः । विसेषानवधारणात् । त्रयाणां चाग्निजीव परमात्मनामस्मिन् ग्रन्थे प्रश्नोपन्यासोपलब्धेः । किं तावत् प्राप्तम्? अग्निरत्तेति । कुतः? 'अग्निरन्नादः' इति श्रुतिप्रसिद्धिभ्याम् । जीवो वात्ता स्यात्, 'तयोरन्यः पिप्पलं स्वाद्वत्ति' इति दर्शनात् । न परमात्मा, 'अनश्नन्नन्योऽभिचाकशीति' इति दर्शनादित्येवं प्राप्ते ब्रूमः । अत्तात्र परमात्मा भवितुमर्हति । कुतः? चराचरग्रहणात् । चराचरं हि स्थावरजङ्गमं मृत्यूपसेचनमिहाद्यत्वेन प्रतीयते, तादृशस्य चाद्यस्य न परमात्मनोऽन्यः कात्स्न्येनात्ता सम्भवति । परमात्मा तु विकारजातं संहरन् सर्वमत्तीत्युपपद्यते । नन्विह चराचरग्रहणं नोपलभ्यते, कथं सिद्धवच्चराचरग्रहणं हेतुत्वेनोपादीयते । नैष दोषः । मृत्यूपसेचनत्वेन सर्वस्य प्राणिनिकायस्य प्रतीयमानत्वात्, ब्रह्मक्षत्रयोश्च प्राधान्यात् प्रदर्शनार्थत्वोपपत्तेः । यत्तु परमात्मनोऽपि नात्तृत्वं सम्भवति, 'अनश्नन्नन्योऽभिचाकशीति' इति दर्शनादिति, अत्रोच्यते, कर्मफलभोगस्य प्रतिषेधकमेतद्दर्शनम्, तस्य सन्निहितत्वात् । न विकारसंहारस्य प्रतिषेधकम्, सर्ववेदान्तेषु सृष्टिस्थितिसंहारकारणत्वेन ब्रह्मणः प्रसिद्धत्वात् ।

**गुरुराजीयम्** – एवमन्वाख्यानपक्षमेवाङ्गीकृत्य सर्वं वा अत्तीत्यनेन सर्वात्तृत्वरूपमदितिशब्दप्रवृत्तिनिमित्तमेवोच्यत इत्युपपादितम् । इदानीं तु हेतुपरत्वेऽपि व्याचष्टे – **किञ्चेत्यादिना** ।।

ननु पूर्ववाक्येऽदितिशब्दस्याप्रयुक्तत्वेऽप्यनुशासनं युज्यते । अदितिर्देवतामयीत्यादौ स्थलान्तरे प्रयुक्तस्यादितिशब्दस्य निर्वचनं क्रियत इति किं न स्यादित्यत आह – **नचेति** ।।

किञ्चादितिशब्दस्य प्रसिद्धादितिपरत्वे सर्वं वा अत्तीति सर्वशब्दोऽनुपपन्नः । नचात्रोक्तश्रुतौ सर्वशब्दस्त्वदित्यदनयोग्यसर्वपर इति तत्राह – **एवञ्चेति** ।। किञ्च मृत्युनैवेदमावृतमासीदित्यादिनाऽस्य प्रकरणस्य वैष्णवत्वादितिशब्दस्य प्रसिद्धार्थत्वे प्रकरणविरोधः । नच दर्शपूर्णमासप्रकरणात् पूषाप्रविष्ट भाग इत्युक्तस्य पौष्णपेषणस्येव विष्णुप्रकरणात्तददितेरदितित्व-मित्यस्याप्युत्कर्षोऽस्त्वित्यतो वैषम्येण परिहरति – **नचेति** ।। दृष्टान्ते तु बाधकसद्भावादुत्कर्ष इति भावः ।

नन्वभिक्रामं जुहोतीति दर्शपूर्णमासप्रकरणे श्रुतस्याभिक्रमणस्यैतदङ्ग-प्रयाजान्वयार्थं प्रयाजस्यावान्तरप्रकरणमिव विष्णुप्रकरणेऽदितेरावान्तरप्रकरणं किं न स्यादित्यत आह – **अभिक्रमणस्येति**।। अदितिश्रुतिबालन्नैवेत्यादिप्रकरणम पि अदितेरेवेत्यन्तिमपूर्वपक्षं निराकरोति – **अदितेरिति** ।। छ ।।

।। इति श्रीकेशवभट्टारकेण विरचितायां भावदीपिकायां
अत्तृत्वाधिकरणम् सम्पूर्णम् ।। ।।




'ಸಃ ಯದ್ಯದೇವಾಽಸೃಜತ' ಎಂಬುವ ಮೊದಲು ವಿಷ್ಣುವನ್ನು ಸರ್ವಾತ್ತಾ ಎನ್ನಲಾಗಿದೆ. ಏಕೆ? ಎಂಬ ಪ್ರಶ್ನೆ ಬಂದರೆ 'ಸರ್ವಂ ವಾ ಅತ್ತಿ' ಎಂಬುದಾಗಿ ಅದಿತಿಶಬ್ದದ ನಿರ್ವಚನದ ಮೂಲಕವಾಗಿ ಹೇತುವನ್ನು ನಿರೂಪಿಸಲಾಗಿದೆ. ಒಂದು ವೇಳೆ ಹಿಂದಿನ ವಾಕ್ಯದಲ್ಲಿ ವಿಷ್ಣುವಿನಲ್ಲಿ ಅಥವಾ ಅದಿತಿದೇವಿಯಲ್ಲಿ ಆ ಅದಿತಿಶಬ್ದವನ್ನು ಪ್ರಯೋಗಿಸಿದ್ದರೆ ಅನುಶಾಸನದ ಆಕಾಂಕ್ಷೆ ಬರುತ್ತಿತ್ತು. ಆದರೆ ಮೊದಲು ಅದಿತಿಶಬ್ದವನ್ನು ಪ್ರಯೋಗಿಸದ ಕಾರಣ ಅನುಶಾಸನದ ಆಕಾಂಕ್ಷೆಯು ಬರುವುದಿಲ್ಲ.

ಪರಿಪೂರ್ಣಚಂದ್ರಿಕಾ

ಮೊದಲನೆಯ ಸೂತ್ರದಲ್ಲಿ ಸರ್ವಾತ್ಮತ್ವವೆಂಬ ಲಿಂಗವು ಹೇಳಲ್ಪಟ್ಟದೆ. ಎರಡನೆಯ ಸೂತ್ರದಲ್ಲಿ ಪ್ರಕರಣಪ್ರಮಾಣವು ಹೇಳಲ್ಪಟ್ಟದೆ. ಪ್ರಕರಣಕ್ಕಿಂತ ಲಿಂಗವು ಶ್ರೇಷ್ಠವಾದ್ದರಿಂದ ಸೂತ್ರಕ್ರಮವು ಸ್ಪಷ್ಟವಾಗಿಯೇ ಇದೆ.





## ಅದ್ವೈತಿಗಳ ಅಧಿಕರಣ ಶರೀರ

## तात्पर्यचन्द्रिका

**अत्र परैरुक्तं –**

**यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः ।**
**मृत्युर्यस्योपसेचनं .................. ॥**[१]

---

(१)**शङ्करभाष्यम्** – जीवोऽग्निरीशो वात्ता स्यादोदने जीव इष्यताम् ।
स्वाद्वत्तीति श्रुतेर्वह्निर्वाग्निरन्नाद इत्यदः ॥
ब्रह्मक्षत्रादिजगतो भोज्यत्वात् स्यादिहेश्वरः ।
ईशप्रश्नोत्तरत्वाच्च संहारस्तस्य चात्तृता ॥
कठवल्लीषु पठ्यते 'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः' इति । अत्र कश्चिदोदनोपसेचनसूचितोऽत्ताा प्रतीयते । तत्र किमग्निरत्ता स्यात्, उत जीवः, अथवा परमात्मेति संशयः । विसेषानवधारणात् । त्रयाणां चाग्निजीव परमात्मनामस्मिन् ग्रन्थे प्रश्नोपन्यासोपलब्धेः । किं तावत् प्राप्तम्? अग्निरत्तेति । कुतः? 'अग्निरन्नादः' इति श्रुतिप्रसिद्धिभ्याम् । जीवो वात्ता स्यात्, 'तयोरन्यः पिप्पलं स्वाद्वत्ति' इति दर्शनात् । न परमात्मा, 'अनश्नन्नन्योऽभिचाकशीति' इति दर्शनादित्येवं प्राप्ते ब्रूमः । अत्तात्र परमात्मा भवितुमर्हति । कुतः? चराचरग्रहणात् । चराचरं हि स्थावरजङ्गमं मृत्यूपसेचनमिहाद्यत्वेन प्रतीयते, तादृशस्य चाद्यस्य न परमात्मनोऽन्यः कार्त्स्न्येनात्ता सम्भवति । परमात्मा तु विकारजातं संहरन् सर्वमत्तीत्युपपद्यते । नन्विह चराचरग्रहणं नोपलभ्यते, कथं सिद्धवच्चराचरग्रहणं हेतुत्वेनोपादीयते । नैष दोषः । मृत्यूपसेचनत्वेन सर्वस्य प्राणिनिकायस्य प्रतीयमानत्वात्, ब्रह्मक्षत्रयोश्च प्राधान्यात् प्रदर्शनार्थत्वोपपत्तेः । यत्तु परमात्मनोऽपि नात्तृत्वं सम्भवति, 'अनश्नन्नन्योऽभिचाकशीति' इति दर्शनादिति, अत्रोच्यते, कर्मफलभोगस्य प्रतिषेधकमेतद्दर्शनम्, तस्य सन्निहितत्वात् । न विकारसंहारस्य प्रतिषेधकम्, सर्ववेदान्तेषु सृष्टिस्थितिसंहारकारणत्वेन ब्रह्मणः प्रसिद्धत्वात् ।

तस्मात्परमात्मैवेहात्ता भवितुमर्हति ॥

**प्रकरणाच्च**

इतश्च परमात्मैवेहात्ता भवितुमर्हति, यत्कारणं प्रकरणमिदं परमात्मनः 'न जायते म्रियते वा विपश्चित्' इत्यादि प्रकृतग्रहणं च न्याय्यम् । 'क इत्था वेद यत्र सः' इति च दुर्विज्ञानत्वं परमात्मलिङ्गम् ॥

**भामतीव्याख्या –**

**अत्ता चराचरग्रहणात् ॥ कठवल्लीषु पठ्यते । यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः । मत्र्यस्योपसेचनं क इत्था वेद यत्र स इति ॥** अत्र चादनीयौदनोपसेचनसूचितः कश्चिदत्ता प्रतीयते । अत्तृत्वं च भोक्तृता वा संहर्तृता वा स्यात् । नच प्रस्तुतस्य परमात्मनो भोक्तृतास्ति, 'अनश्नन्नन्योऽभिचाकशीति' इति श्रुत्या भोक्तृताप्रतिषेधात् । जीवात्मनश्च भोक्तृताविधानात् 'तयोरन्यः पिप्पलं स्वाद्वत्ति' इति । तद् यदि भोक्तृत्वमत्तृत्वं ततो मुक्तसंशयं जीवात्मैव प्रतिपत्तव्यः । ब्रह्मक्षत्रादि चास्य कार्यकारणसङ्घातो भोगायतनतया वा साक्षाद्वा सम्भवति भोग्यम् । अथ तुसंहतृ४ता बोकृता, ततस्त्रयाणामग्निजीव-परमात्मनां प्रश्नोपन्यासोपलब्धेः संहर्तृत्वस्याविशेषाद्भवति संशयः । किमत्ता अग्निराहो जीव उताहो परमात्मेति । तत्रौदनस्य भोग्यत्वेन लोके प्रसिद्धेर्भोक्तृत्वमेव प्रथमं बुद्धौ विपरिवर्तते, चरमं तु संहर्तृत्वमिति भोक्तैवात्ता । तथा स जीव एव । 'न जायते म्रियते' इति च तस्यैव स्तुतिः । संहारकालेऽपि संस्कारमात्रेण तस्यावस्थानात् । दुर्ज्ञानत्वं च तस्य सूक्ष्मत्वात् । तस्माज्जीव एवात्तेहोपास्यत इति प्राप्तम् । यदितु संहर्तृत्वमत्तृत्वं तथाप्यग्निरत्ता, 'अग्निरन्नादः' इति श्रुतिप्रसिद्धिभ्याम् । एवं प्राप्तेऽभिधीयते, अत्तात्र परमात्मा, कुतः? चराचरग्रहणात् । 'उभे यस्यौदनः' इति 'मत्युर्यस्योपसेचनम्' इति च श्रूयते । तत्र यदि जीवस्य भोगायतनतया तत्साधनतया च कार्यकारणसङ्घातः स्थितः, न तर्ह्योदनः । नह्योदनो भोगायतनम्, नापि भोगसाधनम्, अपितु भोग्यः । नच भोगायतनस्य बोगसाधनस्य वा भोग्यत्वं मुख्यम् । नचात्र मृत्युरुपसेचनतया कल्प्यते । नच जीवस्य कार्यकारणसङ्घातो ब्रह्मक्षत्रादिरूपो भक्ष्यः, कस्यचित् क्रूरसत्त्वस्य व्याघ्रादेः कश्चिद् भवेत् न तु सर्वथा सर्वजीवस्य । तेन ब्रह्मक्षत्रविषयमपि सर्वजीवस्यात्तृत्वं न व्याप्नोति, किमङ्ग पुनर्मृत्यूपसेचनव्याप्तं चराचरम् । नचौदनपदात् प्रथमावगतभोग्यत्वानुरोधेन यथासम्भवमत्तृत्वं युज्यत इति युक्तम् । नह्योदनपदं श्रुत्या, भोग्यत्वमाह, किन्तु लक्षणया । नच लाक्षणिकभोग्यत्वानुरोधेन 'मृत्युर्यस्योपसेचनम्' इति च 'ब्रह्म च क्षत्रं च' इति च श्रुती सङ्कोचमर्हतः । नच ब्रह्मक्षत्रे एवात्र विवक्षिते, मृत्यूपसेचनेन प्राणमृन्मात्रोपस्थापनात् । प्राणिषु प्रधानत्वेन च ब्रह्मक्षत्रोपन्यासोपपत्तेः,

इति काठकवाक्ये ओदनोपसेचनपदाभ्यां सूचितोऽत्ता जीव एव, अत्तृत्वस्य भोज्यतया प्रसिद्धौदनसम्बन्धेन भोक्तृत्वरूपत्वात् ब्रह्मणश्चाभोक्तृत्वादिति प्राप्ते,

सत्यमभोक्तृ ब्रह्म, तथाऽपि तदेवात्तृ, अत्तृत्वस्य संहर्तृत्वरूपत्वात्, तस्याक्रिये शुद्धे ब्रह्मणि असम्भवेऽपि मायोपाधिके सम्भवात् । भक्तवाचिनश्चौदनशब्दस्य भोक्तृप्रतियोगिभोज्यत्वं न मुख्यवृत्त्याऽर्थः । अमुख्यवृत्त्या चेत्तर्ह्योदनगतं संहर्तृ-प्रतियोगिसंहार्यत्वमेव अर्थोऽस्तु ।

एवञ्च ब्रह्मक्षत्रादिपदानां न मुख्यार्थत्यागः, जीवपक्षे तु तत्त्यागः । नहि कश्चिदपि जीवः सर्वस्य ब्रह्मक्षत्रस्य मृत्योश्च भोक्ताऽस्तीति सिद्धन्त इति ।

ಅನುವಾದ - ಅದ್ವೈತಿಗಳ ಅಧಿಕರಣಶರೀರ ಹೀಗಿದೆ -

ಯಸ್ಯ ಬ್ರಹ್ಮ ಚ ಕ್ಷತ್ರಂ ಚ ಉಭೇ ಭವತ ಓದನಃ।
ಮೃತ್ಯುರ್ಯಸ್ಯೋಪಸೇಚನಂ ................. ॥

ಎಂಬ ಕಾಠಕವು ವಿಷಯವಾಕ್ಯವಾಗಿದೆ. ಈ ವಾಕ್ಯದಲ್ಲಿರುವ 'ಓದನ' ಮತ್ತು 'ಉಪಸೇಚನ' ಪದಗಳಿಂದ ಅತ್ತೃತ್ವವು ಸೂಚಿತವಾಗಿದೆ. ಅಂದರೆ ತಿನ್ನುವ ವ್ಯಕ್ತಿ ಇದ್ದರೆ ಮಾತ್ರ ಅನ್ನ ಮತ್ತು ಉಪಸೇಚನಗಳು (ಉಪ್ಪಿನಕಾಯಿ) ಇರಲು ಸಾಧ್ಯ. ಆ ತಿನ್ನುವ ವ್ಯಕ್ತಿಯು ಜೀವನೆಂದು ಪೂರ್ವಪಕ್ಷ. ಏಕೆಂದರೆ ಅತ್ತೃತ್ವವು ಭೋಕ್ತೃತ್ವರೂಪವಾಗಿದೆ. 'ಭೋಕ್ತೃತ್ವ' ಎಂದರೆ ಭೋಜ್ಯವಾದ ಪ್ರಸಿದ್ಧವಾದ ಓದನದ ಸಂಬಂಧವಿರುವುದರಿಂದ ಅತ್ತೃತ್ವವು ಭೋಕ್ತೃತ್ವ ರೂಪವಾಗುತ್ತದೆ. ಬ್ರಹ್ಮನಾದರು ಅಭೋಕ್ತೃವಾಗಿದ್ದಾನೆ. ಆದ್ದರಿಂದ ಅತ್ತೃತ್ವವನ್ನು ಬ್ರಹ್ಮನಲ್ಲಿ ಹೇಳಲು ಸಾಧ್ಯವಿಲ್ಲವೆಂದು ಪೂರ್ವಪಕ್ಷ.

ಬ್ರಹ್ಮನು ಅಭೋಕ್ತೃ ಎಂಬ ವಿಚಾರವು ವಾಸ್ತವವಾಗಿದೆ. ಆದರೂ ಸಹ ಅತ್ತೃತ್ವ ಧರ್ಮವುಳ್ಳವನು ಬ್ರಹ್ಮನೇ ಹೊರತು ಜೀವನಲ್ಲ. ಏಕೆಂದರೆ ಅತ್ತೃತ್ವಶಬ್ದಕ್ಕೆ ತಿನ್ನುವುದು ಎಂದರ್ಥವಲ್ಲ. ಸಂಹಾರ ಮಾಡುವುದು ಎಂದರ್ಥ. ಸಂಹಾರ ಮಾಡುವಿಕೆ ಎಂಬ ಕ್ರಿಯೆಯು ಶುದ್ಧಬ್ರಹ್ಮನಲ್ಲಿ ಅಸಂಭಾವಿತವಾಗಿರಬಹುದು; ಆದರೆ ಮಾಯಾವಿಶಿಷ್ಟಬ್ರಹ್ಮನಲ್ಲಿ ಸಂಭಾವಿತವಾಗಿದೆ. ಅನ್ನವನ್ನು ಹೇಳುವ ಓದನ ಶಬ್ದವು ಭೋಕ್ತೃಪ್ರತಿಯೋಗಿಯಾದ ಭೋಜ್ಯದಲ್ಲಿ ಮುಖ್ಯಾರ್ಥವನ್ನು ಹೊಂದಿರುವುದಿಲ್ಲ. ಅಮುಖ್ಯವೃತ್ತಿಯಿಂದ ಅನ್ನವೆಂಬರ್ಥವನ್ನು ಹೇಳಬಹುದು. ಆವಾಗ ಓದನದಲ್ಲೇ ಇರುವ ಸಂಹರ್ತೃಪ್ರತಿಯೋಗಿಯಾದ ಸಂಹಾರ್ಯತ್ವವನ್ನೇ ಏಕೆ ತೆಗೆದುಕೊಳ್ಳಬಾರದು ಅಂದರೆ

---

अन्यनिवृत्तेरशाब्दत्वात्, अनर्थत्वाच्च । तथाच चराचरसंहर्तृत्वं परमात्मन एव । नाग्नेः, नापि जीवस्य । तथाच 'न जायते म्रियते वा विपश्चित्' इति ब्रह्मणः प्रकृतस्य न हानं भविष्यति । 'क इत्था वेद यत्र सः' इति च दुर्ज्ञानतोपपत्स्यते । जीवस्य तु सर्वलोकप्रसिद्धस्य न दुर्ज्ञानता । तस्मादत्ता परमात्मैवेति सिद्धम् ॥ ९-१० ॥

ಅತ್ತ್ರಾಧಿಕರಣ (೧-೨-೨)

ಅಮುಖ್ಯವೃತ್ತಿಯಿಂದ ಅನ್ನದಲ್ಲಿ ಭೋಜ್ಯತ್ವವನ್ನು ತೆಗೆದುಕೊಳ್ಳುವುದಾದರೆ ಅದೇ ಅಮುಖ್ಯವೃತ್ತಿಯಿಂದ ಸಂಹಾರ್ಯತ್ವವನ್ನೇಕೆ ತೆಗೆದುಕೊಳ್ಳಬಾರದೆಂದು ಅಭಿಪ್ರಾಯ. ಹೀಗೆ ಹೇಳಿದಾಗ ಬ್ರಹ್ಮ, ಕ್ಷತ್ರ ಮೊದಲಾದ ಶಬ್ದಗಳಿಗೆ ಮುಖ್ಯಾರ್ಥವನ್ನು ಬಿಡಬೇಕಾಗಿಲ್ಲ. ಭೋಕ್ತೃತ್ವ ಎಂಬರ್ಥವನ್ನು ಸ್ವೀಕರಿಸಿದರೆ ಬ್ರಹ್ಮಾದಿಗಳಲ್ಲಿ ಭೋಜ್ಯತ್ವವಿಲ್ಲದ ಕಾರಣ ಮುಖ್ಯಾರ್ಥವನ್ನು ಬಿಡಬೇಕಾಗುತ್ತದೆ. ಆದ್ದರಿಂದ ಯಾರೊಬ್ಬ ಜೀವನೂ ಸಹ ಬ್ರಹ್ಮ, ಕ್ಷತ್ರ, ಮೃತ್ಯು ಮೊದಲಾದವರಿಗೆ ಭೋಕ್ತೃ ಆಗಲು ಸಾಧ್ಯವಿಲ್ಲ. ಜೀವಪಕ್ಷದಲ್ಲಿ ಮುಖ್ಯಾರ್ಥ ತ್ಯಾಗವೆಂಬ ದೋಷವಿದೆ. ಆದ್ದರಿಂದ ಅತ್ತೃತ್ವ ಧರ್ಮವುಳ್ಳವನು ಬ್ರಹ್ಮನೇ ಆಗಿದ್ದಾನೆಂದು ಸಿದ್ಧಾಂತ.

**प्रकाशः –**

**अत्र परैरिति** । मायावादिभिरित्यर्थः । विषयवाक्ये 'अत्ता' इति पदाश्रवणात्तल्लाभमाह – **ओदनेति** । अद्यत्वे सत्यदनसाधनमुपसेचनं, तयोरदनीयवाचित्वात्प्रतिसम्बद्ध्यत्ता लभ्यत इत्यर्थः । भोज्यतया प्रसिद्धो य ओदनः तत्सम्बन्धेनेत्यर्थः ।

**अभोक्तृत्वादिति** । पूर्वत्र सम्भोगसूत्रेऽभोक्तृक्तेः "अनश्नन्" इत्यादिश्रुतेश्चेति भावः । **मायेति** । 'मायोपाधेः परस्यास्ति संहर्तृत्वम्' इति कल्पतरूक्तेरिति भावः ।

संहर्तृत्वलाभप्रकारमाह – **भक्तेति** । अन्नवाचिन इत्यर्थः । को विशेष इत्यत आह – **एवञ्चेति** । मुख्यार्थत्यागमुपपादयति – **नहीति** । ब्रह्मणस्तु सर्वसंहर्तृत्वं युज्यत इति भावः ।

ವಿವರಣೆ - ಮಾಯಾವಾದಿಗಳು ರಚಿಸಿದ ಅತ್ತೃತ್ವಾಧಿಕರಣವನ್ನು ಅನುವಾದ ಮಾಡುತ್ತಿದ್ದಾರೆ. ವಿಷಯವಾಕ್ಯದಲ್ಲಿ 'ಅತ್ತಾ' ಎಂಬ ಪದವು ಕೇಳಿಸುತ್ತಿಲ್ಲ. ಆದ್ದರಿಂದ ಅತ್ತೃತ್ವವು ಹೇಗೆ ತಿಳಿಯುತ್ತದೆಂಬುದನ್ನು 'ಓದನ ಉಪಸೇಚನಪದಾಭ್ಯಾಂ' ಎಂಬುದರಿಂದ ಸ್ಪಷ್ಟಪಡಿಸಿದ್ದಾರೆ. 'ಉಪಸೇಚನ' ಎಂದರೆ ಅದ್ಯತೇತಿ ಅದನಸಾಧನಂ = ತಿನ್ನಲು ಯೋಗ್ಯವಾಗಿದ್ದು ತಿನ್ನುವ ಪದಾರ್ಥಗಳಿಗೆ ಸಾಧನವನ್ನಾಗಿ ಉಪಯೋಗಿಸುವ ಪದಾರ್ಥ. ಉಪ್ಪಿನಕಾಯಿ ಎಂದರ್ಥ. ಓದನ ಹಾಗೂ ಉಪಸೇಚನಗಳು ತಿನ್ನುವ ವಸ್ತುಗಳನ್ನು ಹೇಳುವುದರಿಂದ ಇವುಗಳಿಗೆ ಕೃತಿಸಂಬಂಧಿಯಾಗಿ ಇವುಗಳಿಗೆ ತಿನ್ನುವವನು ಬೇಕಾದ್ದರಿಂದ 'ಅತ್ತಾ' ಎಂಬುದು ಲಾಭವಾಗುತ್ತದೆ. 'ಪ್ರಸಿದ್ಧೋದನ ಸಂಬಂಧೇನ' ಎಂಬ ಪದಕ್ಕೆ ಭೋಜ್ಯವೆಂದು ಪ್ರಸಿದ್ಧವಾದ ಯಾವ ಓದನ ಪದವಿದೆಯೋ ಅದರ ಸಂಬಂಧದಿಂದ ಎಂದರ್ಥ.

ಗ್ರಂಥದಲ್ಲಿ ಬ್ರಹ್ಮನನ್ನು 'ಅಭೋಕ್ತೃ' ಎನ್ನಲಾಗಿದೆ. ಏಕೆಂದರೆ ಹಿಂದಿನ ಅಧಿಕರಣದ 'ಸಂಭೋಗ' ಸೂತ್ರದಲ್ಲಿ ಬ್ರಹ್ಮನಿಗೆ ಅಭೋಕ್ತೃತ್ವವು ಹೇಳಲ್ಪಟ್ಟಿದೆ. ಮತ್ತು "ಅನಶ್ನನ್" ಎಂಬ ಶ್ರುತಿಯು ಸ್ಪಷ್ಟವಾಗಿ ಬ್ರಹ್ಮನಿಗೆ ಅಭೋಕ್ತೃತ್ವವನ್ನು ಪ್ರತಿಪಾದಿಸುತ್ತಿದೆಯೆಂದು ತಿಳಿಯಬೇಕು. ಗ್ರಂಥದಲ್ಲಿ 'ಮಾಯೋಪಾಧಿಕೇ'

ಎಂದಿದೆ. ಕಲ್ಪತರುವಿನಲ್ಲಿ 'ಮಾಯೋಪಾಧೇಃ ಪರಸ್ಯಾಸ್ತಿ ಸಂಹರ್ತೃತ್ವಂ' ಮಾಯಾವಿಶಿಷ್ಟನಾದ ಬ್ರಹ್ಮನಿಗೆ ಸಂಹರ್ತೃತ್ವವನ್ನು ಹೇಳಬಹುದು ಎಂದು ಹೇಳಲಾಗಿದೆ. ಅದನ್ನು ವಿವಕ್ಷಿಸಿ ಗ್ರಂಥಕಾರರು 'ಮಾಯೋಪಾಧಿಕೇ' ಎಂದಿದ್ದಾರೆ.

ಬ್ರಹ್ಮನಲ್ಲಿ ಸಂಹರ್ತೃತ್ವಧರ್ಮವು ಹೇಗೆ ಬರುತ್ತದೆಂಬುದನ್ನು 'ಭಕ್ತವಾಚಿನಃ' ಎಂಬ ವಾಕ್ಯದಿಂದ ನಿರೂಪಿಸುತ್ತಿದ್ದಾರೆ. 'ಭಕ್ತವಾಚಿನಃ' ಎಂದರೆ ಅನ್ನವಾಚಿಯಾದ ಎಂದರ್ಥ. ಸಂಹರ್ತೃತ್ವವನ್ನು ವಿವಕ್ಷಿಸಿದ್ದರಿಂದ ಯಾವ ವಿಶೇಷವನ್ನು ಹೇಳಿದಂತಾಯಿತು ? ಎಂಬ ಪ್ರಶ್ನೆಗೆ 'ಏವಂಚ' ಎಂಬ ವಾಕ್ಯದಿಂದ ಉತ್ತರಿಸುತ್ತಿದ್ದಾರೆ. ಬ್ರಹ್ಮ, ಕ್ಷತ್ರಾದಿ ಪದಗಳಿಗೆ ಮುಖ್ಯಾರ್ಥವನ್ನು ಬಿಟ್ಟಂತಾಗುತ್ತದೆಂಬುದನ್ನು 'ನಹಿ' ಇತ್ಯಾದಿ ವಾಕ್ಯದಿಂದ ಉಪಪಾದನೆ ಮಾಡುತ್ತಿದ್ದಾರೆ. ಬ್ರಹ್ಮನಿಗಾದರೂ ಸರ್ವಸಂಹರ್ತೃತ್ವಧರ್ಮವು ಯುಕ್ತವಾಗುತ್ತದೆಂದು ಅಭಿಪ್ರಾಯ.




ಶಾಂಕರಭಾಷ್ಯದಲ್ಲಿ ಹೀಗೆ ವ್ಯಾಖ್ಯಾನಿಸಿದ್ದಾರೆ -

ಯಸ್ಯ ಬ್ರಹ್ಮ ಚ ಕ್ಷತ್ರಂ ಚ ಉಭೇ ಭವತ ಓದನಃ ।
ಮೃತ್ಯುರ್ಯಸ್ಯೋಪಸೇಚನಂ ಖ ಇತ್ಥಾ ವೇದ ಯತ್ರ ಸಃ ........................... ॥

ಎಂಬ ಕಾಠಕದಲ್ಲಿರುವ ವಾಕ್ಯವೇ ಈ ಅಧಿಕರಣದ ವಿಷಯ. ಈ ವಾಕ್ಯದಲ್ಲಿ ಬ್ರಾಹ್ಮಣ ಹಾಗೂ ಕ್ಷತ್ರಿಯರನ್ನು ಅನ್ನವೆಂದು ಯಮನನ್ನು ಉಪಸೇಚನವೆಂದು ಹೇಳಿ ಯಾರು ಇವರನ್ನು ತಿನ್ನುತ್ತಾರೋ ಅಂತಹ ವ್ಯಕ್ತಿಯನ್ನು ತಿಳಿದವರು ಯಾರೆಂಬುದನ್ನೂ ಹೇಳಲಾಗಿದೆ.

ಪೂರ್ವಪಕ್ಷ - ಕಾಠಕೋಪನಿಷತ್ತು ಯಮ ಹಾಗೂ ನಚಿಕೇತರ ಸಂವಾದ ರೂಪವಾಗಿದೆ. ಅಗ್ನಿ, ಜೀವ, ಬ್ರಹ್ಮ ಮೂವರ ಪ್ರಸ್ತಾಪ ಇದರಲ್ಲಿದೆ. 'ಅನಶ್ನನ್' ಎಂಬ ಶ್ರುತಿ ಪ್ರಮಾಣದಿಂದ ಬ್ರಹ್ಮನಿಗೆ ಭೋಗ ಇರುವುದಿಲ್ಲ. ಆದ್ದರಿಂದ ಉಳಿದ ಜೀವನಿಗೆ ಅಥವಾ ಅಗ್ನಿಗೆ ಭೋಕ್ತೃತ್ವವನ್ನು ಹೇಳಬೇಕು. ಸೂತ್ರದಲ್ಲಿರುವ 'ಅತ್ತಾ' ಎಂಬ ಪದವು ತಿನ್ನುತ್ತಾನೆಂಬರ್ಥವನ್ನು ಹೇಳುತ್ತದೆ ಹೊರತು ಸಂಹಾರ ಎಂಬ ಅರ್ಥವನ್ನು ಹೇಳುವುದಿಲ್ಲ. ತಿನ್ನುವಿಕೆಯು ಜೀವನಲ್ಲೇ ಬರುತ್ತದೆ.

ಸಿದ್ಧಾಂತ - ಜೀವನಾಗಲಿ ಅಗ್ನಿಯಾಗಲಿ ಬ್ರಾಹ್ಮಣ ಅಥವಾ ಕ್ಷತ್ರಿಯರ ಅನ್ನವನ್ನು ತಿನ್ನಲು ಸಾಧ್ಯವಿಲ್ಲ. ಅಂತಹ ಸಾಮರ್ಥ್ಯ ಜೀವನಲ್ಲಿ ಅಸಂಭಾವಿತ. ಆದ್ದರಿಂದ ಸೂತ್ರದಲ್ಲಿ 'ಅತ್ತಾ' ಎಂಬ ಪದಕ್ಕೆ ಸಂಹಾರ ಮಾಡುತ್ತಾನೆಂಬ ಅರ್ಥವನ್ನೇ ಹೇಳಬೇಕು. ತಿನ್ನುತ್ತಾನೆಂಬ ಅರ್ಥವನ್ನು ಹೇಳಬಾರದು. ಬ್ರಹ್ಮನು ಸಮಸ್ತ ಜಗತ್ತನ್ನು ಸಂಹಾರ ಮಾಡುತ್ತಾನಾದ್ದರಿಂದ ಈ ವಾಕ್ಯದಿಂದ ಪ್ರತಿಪಾದ್ಯನಾದವನು ಬ್ರಹ್ಮನೇ ಆಗಿದ್ದಾನೆ.





ಅತ್ತ್ರಧಿಕರಣ (೧-೨-೨)

तात्पर्यचन्द्रिका

अत्र ब्रूमः –

भोक्तृताऽपि विशिष्टेऽस्तु यथा संहर्तृता तव ।
अभोक्तृत्वं निविशतां शुद्धे कौटस्थ्यवत्सुखम् ।।

अभोक्तृत्वश्रुतेर्निर्विकारत्वश्रुतिवच्छुद्धविषयत्वसम्भवेन मायोपाधिके संहर्तृतेव भोक्तृताऽप्यस्तु । एवञ्च ब्रह्मक्षत्रादिशब्दानां न मुख्यार्थः त्यागः, तद्भोक्तृत्वस्य ब्रह्मणि सम्भवात्,

ओदनादिपदोपस्थापितस्यान्तरङ्गस्य भोग्यत्वस्यापि न त्यागः । नहि 'अग्निर्माणवकः' इत्यत्राग्निशब्दः पैङ्गल्यादिकमिव द्रव्यत्वाद्युपस्थापयति, न वा "प्रोद्गातॄणां" इत्यत्रोद्गातृशब्दोऽन्तरङ्गभूतान् प्रस्तोत्रादीनिव षोडशर्त्विजो लक्षयति, येनात्राप्योदनशब्दः संहार्यत्वमुपस्थापयेत् ।

अपिच "सर्वं वा अत्ति" इति मदीयविषयवाक्य इव त्वदीये वाक्ये सूत्रे प्रतिज्ञातोत्ता हेतूकृतं चराचरग्रहणं च न साक्षादस्ति ।।

यच्चोक्तं परैः – "प्रकरणात्" इति सूत्रस्य "न जायते म्रियते वा विपश्चित्" इति परमात्मन एव प्रकृतत्वाच्च स एवात्तेत्यर्थ इति, तन्न, "न जायते" इत्यस्मादुत्तरवाक्ये "न हन्यते हन्यमानेऽपि देहे" इति देहसम्बन्धस्य,

हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् ।
उभौ तौ न विजानीतः ................ ।।

इति हन्तृत्वादिभ्रान्तेश्च जीवलिङ्गस्य दर्शनेन "न जायते" इत्यादेर्जीवविषयत्वात् ।

अत्रापि परमतेऽप्यत्तुर्जीवत्वं निषिद्ध्य ब्रह्मत्वोक्तेस्तदैक्यप्रतिकूलता व्यक्तैव ।।

ಅನುವಾದ - ಅದ್ವೈತಿಗಳ ಈ ಅಧಿಕರಣಶರೀರವು ಅಸಾಧುವಾಗಿದೆ. ಸಂಹರ್ತೃತ್ವವನ್ನು ಮಾಯಾವಿಶಿಷ್ಟಬ್ರಹ್ಮನಲ್ಲಿ ಹೇಗೆ ಹೇಳುತ್ತೀರೋ ಅದರಂತೆ ಭೋಕ್ತೃತ್ವವನ್ನೂ ಸಹ ಅವನಲ್ಲೇ ಹೇಳಬಹುದು. ಭೋಕ್ತೃನಲ್ಲವೆನ್ನುತ್ತಿದೆಯಲ್ಲವೆ ಎಂದರೆ ನಿರ್ವಿಕಾರನಾದ ಶುದ್ಧಬ್ರಹ್ಮನಲ್ಲಿ ಅಭೋಕ್ತೃತ್ವವನ್ನು ಹೇಳಬಹುದು.

ಭೋಕ್ತೃತಾಽಪಿ ವಿಶಿಷ್ಟೇಽಸ್ತು ಯಥಾ ಸಂಹರ್ತೃತಾ ತವ ।
ಅಭೋಕ್ತೃತ್ವಂ ನಿವಿಶತಾಂ ಶುದ್ಧೇ ಕೌಟಸ್ಥ್ಯವತ್ಸುಖಮ್ ॥

ಅಭೋಕ್ತೃತ್ವ ಶ್ರುತಿಗೆ ನಿರ್ವಿಕಾರತ್ವ ಶ್ರುತಿಯಂತೆ ಶುದ್ಧಬ್ರಹ್ಮವಿಷಯತ್ವವನ್ನು ಹೇಳಬಹುದು. ಆದ್ದರಿಂದ ಮಾಯಾವಿಶಿಷ್ಟನಾದ ಬ್ರಹ್ಮನಲ್ಲಿ ಸಂಹರ್ತೃತ್ವವನ್ನು ಹೇಳಿದಂತೆ ಭೋಕ್ತೃತ್ವವನ್ನೂ ಸಹ ಹೇಳಬಹುದು. ಹೀಗೆ ಹೇಳಿದಾಗ ಬ್ರಹ್ಮ, ಕ್ಷತ್ರ ಮೊದಲಾದ ಶಬ್ದಗಳಿಗೆ ಮುಖ್ಯಾರ್ಥವನ್ನು ಬಿಟ್ಟಂತಾಗುವುದಿಲ್ಲ. ಏಕೆಂದರೆ ಚತುರ್ಮುಖ ಬ್ರಹ್ಮ, ವಾಯುದೇವರು ಮೊದಲಾದವರ ಭಕ್ಷಣವನ್ನು ಬ್ರಹ್ಮನಲ್ಲಿ ಹೇಳಬಹುದು.

ಓದನಾದಿ ಪದಗಳಿಗೆ ಅಂತರಂಗವಾದದ್ದು ಭೋಜ್ಯತ್ವವೇ ಹೊರತು ಸಂಹರ್ತೃತ್ವವಲ್ಲ. ಸಂಹಾರ್ಯವಾದದ್ದನ್ನೆಲ್ಲಾ ಓದನವೆನ್ನುವುದಿಲ್ಲ. ಆದರೆ ಭೋಜ್ಯವಾದದ್ದನ್ನೆಲ್ಲ ಓದನವೆನ್ನುತ್ತಾರೆ. ಹೀಗೆ ಅಸಾಧಾರಣಧರ್ಮವಾದ್ದರಿಂದ ಅಂತರಂಗವೆನಿಸಿದ ಓದನ ಪದದಿಂದ ಉಪಸ್ಥಾಪಿತವಾದ ಭೋಜ್ಯತ್ವವನ್ನು ಬಿಡಬಾರದು. 'ಅಗ್ನಿರ್ಮಾಣವಕಃ' ಎಂದು ಹೇಳಿದಾಗ ಅಗ್ನಿಶಬ್ದವು ಪಿಂಗಲವರ್ಣವನ್ನು ಉಪಸ್ಥಾಪನೆ ಮಾಡುವಂತೆ ದ್ರವ್ಯತ್ವಾದಿಗಳನ್ನು ಉಪಸ್ಥಾಪನೆ ಮಾಡುವುದಿಲ್ಲವಷ್ಟೇ. ಅಥವಾ "ಪ್ರೋದ್ಗಾತೃಣಾಂ" ಎಂಬಲ್ಲಿ 'ಉದ್ಗಾತೃ' ಶಬ್ದದಲ್ಲಿ ಅಂತರಂಗವಾದ ಪ್ರಸ್ತೋತ್ರಾದಿಗಳನ್ನು ವಿವಕ್ಷಿಸುವಂತೆ ಹದಿನಾರು ಮಂದಿ ಋತ್ವಿಜರನ್ನು ಲಕ್ಷಣಯಾ ವಿವಕ್ಷಿಸುವುದಿಲ್ಲ. ಹಾಗೇ ಅಂತರಂಗವನ್ನು ಬಿಡುವುದಾದಲ್ಲಿ ಇಲ್ಲಿಯೂ ಸಹ ಓದನ ಶಬ್ದವು ಸಂಹಾರ್ಯತ್ವವನ್ನು ಉಪಸ್ಥಾಪನೆ ಮಾಡುತ್ತಿತ್ತು.

ಮತ್ತು "ಸರ್ವಂ ವಾ ಅತ್ತಿ" ಎಂಬುದು ನಮ್ಮ ಮತದ ವಿಷಯವಾಕ್ಯ. ನಿಮ್ಮ ಮತದಲ್ಲಿ "ಯಸ್ಯ ಬ್ರಹ್ಮ ಚ" ಎಂಬುದು ವಿಷಯವಾಕ್ಯ. ನಾವು ಹೇಳುವ ವಿಷಯವಾಕ್ಯದಲ್ಲಿ ಸೂತ್ರದಲ್ಲಿ ಪ್ರತಿಜ್ಞೆ ಮಾಡಲ್ಪಟ್ಟ ಅತ್ತೃತ್ವವು ಮತ್ತು ಹೇತುವನ್ನಾಗಿ ಮಾಡಲ್ಪಟ್ಟ ಚರಾಚರ ಗ್ರಹಣವು ನೇರವಾಗಿ ತಿಳಿಯುತ್ತದೆ. ಆದರೆ ನೀವು ಉಲ್ಲೇಖಿಸುತ್ತಿರುವ ವಿಷಯವಾಕ್ಯದಲ್ಲಿ ಸೂತ್ರದಲ್ಲಿ ಪ್ರತಿಜ್ಞೆ ಮಾಡಲ್ಪಟ್ಟ ಅತ್ತೃತ್ವವಾಗಲೀ ಹೇತುವಾಗಿರುವ ಚರಾಚರಗ್ರಹಣವಾಗಲಿ ನೇರವಾಗಿ ತಿಳಿಯಲು ಸಾಧ್ಯವಿಲ್ಲ.

ಅದ್ವೈತಿಗಳು 'ಪ್ರಕರಣಾತ್' ಎಂಬ ಎರಡನೇ ಸೂತ್ರಕ್ಕೆ ಹೀಗೆ ವ್ಯಾಖ್ಯಾನಿಸುತ್ತಾರೆ - 'ನ ಜಾಯತೇ ಮ್ರಿಯತೇ ವಾ ವಿಪಶ್ಚಿತ್' ಎಂಬುದಾಗಿ ಹಿಂದೆ ಪರಮಾತ್ಮನೇ ಪ್ರಕೃತನಾದ್ದರಿಂದ ಅವನೇ 'ಅತ್ತಾ' ಎನಿಸುತ್ತಾನೆಂದು. ಈ ವ್ಯಾಖ್ಯಾನವೂ ಸಹ ತಪ್ಪು. ಏಕೆಂದರೆ 'ನ ಜಾಯತೇ' ಎಂಬ ಮುಂದಿನ

ವಾಕ್ಯದಲ್ಲಿ "ನ ಹನ್ಯತೇ ಹನ್ಯಮಾನೇಽಪಿ ದೇಹೇ" ಎಂಬುದಾಗಿ ದೇಹ ಸಂಬಂಧವು ಕೇಳಿಸುತ್ತಿದೆ. ಮತ್ತು "ಹಂತಾ ಚೇನ್ಮನ್ಯತೇ ಹಂತುಂ ಹತಶ್ಚೇನ್ಮನ್ಯತೇ ಹತಮ್ । ಉಭೌ ತೌ ನ ವಿಜಾನೀತಃ .................. ॥ ಎಂಬುದಾಗಿ ಹಂತೃತ್ವಾದಿಗಳ ಭ್ರಾಂತಿಯನ್ನು ನಿರಾಕರಿಸಲಾಗಿದೆ. ಇವೆಲ್ಲವೂ ಜೀವನ ಲಿಂಗಗಳಾಗಿರುವುದರಿಂದ 'ನ ಜಾಯತೇ' ಎಂಬ ವಾಕ್ಯದಿಂದ ಪ್ರತಿಪಾದ್ಯನಾದವನು ಜೀವನೇ ಆಗುತ್ತಾನೆ.

ಹಿಂದಿನ ಅಧಿಕರಣಗಳಂತೆ ಈ ಅಧಿಕರಣದಲ್ಲಿಯೂ ಅದ್ವೈತಿಗಳು ಜೀವನಲ್ಲಿ ಅತ್ತೃತ್ವವಿಲ್ಲವೆಂದು ನಿಷೇಧ ಮಾಡಿ ಬ್ರಹ್ಮನಲ್ಲಿದೆಯೆಂದು ಹೇಳಿರುವುದರಿಂದ ಜೀವೈಕ್ಯ ಸಾಧನೆಗೆ ಈ ಅಧಿಕರಣವೂ ಸಹ ಪ್ರತಿಕೂಲವೇ ಆಗುತ್ತದೆ.

**प्रकाशः –**

यदुक्तममुख्यत्वाविशेषाद्ब्रह्मक्षत्रादिशब्दमुख्यत्वायौदनादिपदस्य संहार्यत्वमेवार्थोऽस्त्विति, तत्रामुख्यत्वाविशेषेऽप्यन्तरङ्गत्वाद्भोक्तृत्वप्रतिसम्बन्धि भोज्यत्वमेव लक्ष्यताम्, ब्रह्मक्षत्रादिशब्दस्य मुख्यत्वं च शक्यसम्पादमिति भावेन तदीयसिद्धान्तरचनां निरस्यति – **भोक्तृतेति ।**

ವಿವರಣೆ - ಅದ್ವೈತಿಗಳ ಅಧಿಕರಣಶರೀರವು ಅಸಾಧುವಾಗಿದೆ. ಅದ್ವೈತಿಗಳು ಸಿದ್ಧಾಂತವನ್ನು ಮಾಡುವಾಗ ಅತ್ತೃತ್ವವೆಂದರೆ ಭೋಜ್ಯತ್ವವಲ್ಲ, ಸಂಹರ್ತೃತ್ವವೆಂದು ನಿರ್ಣಯಿಸಿದರು. ಹೀಗೆ ನಿರ್ಣಯಿಸಿದ್ದರಿಂದ ಬ್ರಹ್ಮಕ್ಷತ್ರಾದಿ ಪದಗಳಿಗೆ ಮುಖ್ಯಾರ್ಥವನ್ನು ಬಿಟ್ಟಂತಾಗುವುದಿಲ್ಲ. ಮತ್ತು ಭೋಜ್ಯತ್ವದಲ್ಲಿ ಅಮುಖ್ಯಾರ್ಥವನ್ನು ಮಾಡುವಂತೆ ಸಂಹಾರ್ಯತ್ವದಲ್ಲಿ ಅಮುಖ್ಯಾರ್ಥವನ್ನು ಮಾಡಬಹುದು. ಆದ್ದರಿಂದ ಓದನಾದಿ ಪದಗಳಿಗೆ ಸಂಹಾರ್ಯತ್ವವೆಂದೇ ಅರ್ಥ ಹೊರತು ಭೋಜ್ಯತ್ವವೆಂದಲ್ಲ ಎಂದು ಹೇಳಿದರು. ಇದು ತಪ್ಪು. ಅದ್ವೈತಿಗಳು ಹೇಳಿದ ನ್ಯಾಯದಂತೆ ಎರಡೂ ಪಕ್ಷಗಳಲ್ಲಿ ಅಮುಖ್ಯತ್ವವು ಸಮಾನವಾದ್ದರಿಂದ ಓದನಾದಿ ಪದಗಳಿಗೆ ಭೋಜ್ಯತ್ವವೆಂಬರ್ಥವನ್ನೇ ಹೇಳಬಹುದು. ಹೀಗೆ ಹೇಳಿದಾಗ ಓದನ ಪದಕ್ಕೆ ಭೋಜ್ಯತ್ವವೆಂಬ ಅಂತರಂಗಪ್ರಮಾಣವನ್ನು ಆಶ್ರಯಿಸಿದಂತಾಗುತ್ತದೆ. ಆದ್ದರಿಂದ ಲಕ್ಷಣಾ ಮಾಡುವುದೇ ನಿಶ್ಚಿತವಾದಲ್ಲಿ ಭೋಜ್ಯತ್ವದಲ್ಲಿ ಲಕ್ಷಣಾ ಮಾಡುವುದೇ ಒಳ್ಳೆಯದು. ಇನ್ನು ಬ್ರಹ್ಮ, ಕ್ಷತ್ರಾದಿ ಶಬ್ದಗಳಂತೂ ಮುಖ್ಯಾರ್ಥವನ್ನು ಸಂಪಾದಿಸಲು ಅದ್ವೈತಿಗಳಿಗೆ ಸಾಧ್ಯವೇ ಇಲ್ಲ. ಈ ಎಲ್ಲ ವಿಚಾರಗಳನ್ನು ಮನಸ್ಸಿನಲ್ಲಿಟ್ಟುಕೊಂಡು ಅದ್ವೈತಿಗಳ ಸಿದ್ಧಾಂತ ರಚನೆಯ ಕ್ರಮವನ್ನು 'ಭೋಕ್ತೃತಾಪಿ' ಎಂಬ ಶ್ಲೋಕದಿಂದ ನಿರಾಕರಿಸುತ್ತಿದ್ದಾರೆ.

**प्रकाशः** – अनशनश्रुतेर्गतिमाह – **अभोक्तृत्वमिति ।** निविशतामिति "नेर्विशः" इत्यात्मनेपदम् । उत्तरार्धव्यक्तिपूर्वं पूर्वार्धं व्यनक्ति – **अभोक्तृत्वेति ।** को विशेष इत्यतोऽन्तरङ्गत्वादित्याह – **ओदनेति ।**

'ಅನಶ್ನನ್' ಎಂಬ ಶ್ರುತಿಗೆ 'ಅಭೋಕ್ತೃತ್ವಂ' ಎಂಬ ವಾಕ್ಯದಿಂದ ಗತಿಯನ್ನು ಹೇಳುತ್ತಿದ್ದಾರೆ. ಶ್ಲೋಕದಲ್ಲಿ ಗ್ರಂಥಕಾರರು 'ನಿವಿಶತಾಂ' ಎಂದು ಪ್ರಯೋಗಿಸಿದ್ದಾರೆ. ವಾಸ್ತವಿಕವಾಗಿ 'ವಿಶ್' ಧಾತುವು ಪರಸ್ಮೈಪದದಲ್ಲಿರುವುದರಿಂದ 'ನಿವಿಶತು' ಎಂದಾಗಬೇಕಿತ್ತು. ಆದರೆ ''ನೇರ್ವಿಶಃ'' ಎಂಬ ಸೂತ್ರದಲ್ಲಿ 'ವಿ' ಉಪಸರ್ಗ ಸೇರಿದಾಗ ವಿಶ್‌ಧಾತುವಿಗೆ ಆತ್ಮನೇ ಪದವನ್ನೂ ಸಹ ಹೇಳಿದ್ದಾರೆ. ಆದ್ದರಿಂದ 'ನಿವಿಶತಾಂ' ಎಂಬ ಪ್ರಯೋಗವು ಅಸಾಧುವಲ್ಲ. ಶ್ಲೋಕದ ಉತ್ತರಾರ್ಧವನ್ನು ವ್ಯಾಖ್ಯಾನಿಸುವ ಮೂಲಕವಾಗಿ ಪೂರ್ವಾರ್ಧವನ್ನು ವ್ಯಾಖ್ಯಾನಿಸುತ್ತಿದ್ದಾರೆ 'ಅಭೋಕ್ತೃತ್ವ' ಇತ್ಯಾದಿಯಾಗಿ.

ಭೋಜ್ಯತ್ವವನ್ನು ಬಿಟ್ಟು, ಸಂಹಾರ್ಯತ್ವವನ್ನು ಸ್ವೀಕರಿಸಲು ಏನು ಕಾರಣ ? ಎಂಬುದಕ್ಕೆ ಅಂತರಂಗವಾಗಿರುವಿಕೆಯೇ ಕಾರಣವೆಂದು 'ಓದನಾದಿ' ಎಂಬ ವಾಕ್ಯದಿಂದ ಪ್ರತಿಪಾದಿಸುತ್ತಿದ್ದಾರೆ.

**प्रकाशः** – ननु अमुख्यत्वेऽन्तरङ्गत्वं बहिरङ्गत्वं वा अप्रयोजकमित्यत, उपस्थितिवैशेष्यादन्तरङ्गमेवादर्तव्यं, न बहिरङ्गमित्येतदुपपादयति – **नहीति** । इदं गौणवृत्तेरन्तरङ्गस्योपस्थित्युपपादनम् । लक्षणायामाह – **नवेति** । यद्वा – लौकिकवैदिकोदाहरणप्रदर्शनार्थं द्वयम् ।

ಎರಡೂ ಪಕ್ಷಗಳಲ್ಲಿ ಅಮುಖ್ಯಾರ್ಥವನ್ನೇ ಸ್ವೀಕರಿಸಬೇಕು. ಹೀಗಿರುವಾಗ ಅಂತರಂಗ ಬಹಿರಂಗಗಳೆಂಬ ಕಾರಣವು ಅಪ್ರಯೋಜಕಗಳಲ್ಲವೇ? ಎಂಬ ಪ್ರಶ್ನೆಗೆ ಪ್ರತೀತಿಯಲ್ಲಿ ವೈಶಿಷ್ಟ್ಯವಿರುವುದರಿಂದ ಅಂತರಂಗವನ್ನೇ ಉದಾಹರಿಸಬೇಕು ಹೊರತು ಬಹಿರಂಗವನ್ನಲ್ಲ ಎಂಬುದಾಗಿ 'ನಹಿ' ಇತ್ಯಾದಿ ವಾಕ್ಯದಿಂದ ಉಪಪಾದಿಸುತ್ತಿದ್ದಾರೆ. ಇದರಿಂದ ಗೌಣೀವೃತ್ತಿಯ ಅಂತರಂಗಕ್ಕೆ ಉಪಸ್ಥಿತಿಯನ್ನು ಹೇಳಿದಂತಾಯಿತು. ಲಕ್ಷಣಾವೃತ್ತಿಯ ಅಂತರಂಗ ಉಪಸ್ಥಿತಿಯ ಉಪಪಾದನೆಯನ್ನು 'ನ ವಾ' ಇತ್ಯಾದಿಯಾಗಿ ಉಪಪಾದಿಸುತ್ತಿದ್ದಾರೆ. ಅಥವಾ ಎರಡು ದೃಷ್ಟಾಂತಗಳಲ್ಲಿ ಮೊದಲನೆಯದ್ದು ಲೌಕಿಕ ದೃಷ್ಟಾಂತವೆಂದು ಎರಡನೆಯದ್ದು ವೈದಿಕ ದೃಷ್ಟಾಂತವೆಂದು ತಿಳಿಯಬೇಕು.

**प्रकाशः** – उक्तमधिकरणशरीरं ''जन्माद्यस्य'' इति सूत्रे । एकस्तोत्रवचनसम्बन्धादिभिरन्तरङ्गभूतान् प्रस्तोत्रादीनिव बहिरङ्गभूतान् षोडशर्त्विजो यथोद्गातृशब्दो न लक्षयति, तथौदनशब्दोऽपीत्यर्थः ।

ಪ್ರೋದ್ಗಾತ್ರಧಿಕರಣವನ್ನು ಜನ್ಮಾಧಿಕರಣದಲ್ಲಿ ವಿವರಿಸಿದ್ದಾಗಿದೆ. 'ಪ್ರೈತುಹೋತುಶ್ಚಮಸಃ' ಎಂಬ ಸೂತ್ರದಲ್ಲಿ 'ಪ್ರೋದ್ಗಾತ್ರ' ಎಂಬ ವಾಕ್ಯವು ಪ್ರಸಕ್ತವಾಗಿದೆ. ಉದ್ಗಾತೃವು ಒಬ್ಬನೇ ಇರುವುದರಿಂದ ಬಹುವಚನ ಪ್ರಯೋಗ ಹೇಗೆ ? ಎಂದರೆ ಬಹುವಚನ ಇರುವುದರಿಂದ ಬೇರೆ ಋತ್ವಿಜರನ್ನು ತೆಗೆದುಕೊಳ್ಳಬೇಕು. ಬೇರೆಯವರೆಂದರೆ ಹದಿನಾರು ಮಂದಿ ಋತ್ವಿಜರನ್ನು ತೆಗೆದುಕೊಳ್ಳಬೇಕೋ? ಅಥವಾ ಪ್ರಸ್ತೋತೃ ಉದಾತೃ, ಪ್ರತಿಹರ್ತೃ, ಸುಬ್ರಹ್ಮಣ್ಯ ಈ ನಾಲ್ಕು ಮಂದಿಯನ್ನು ತೆಗೆದುಕೊಳ್ಳಬೇಕೋ? ಎಂದು ಸಂಶಯ. ಹದಿನಾರು ಮಂದಿ ಋತ್ವಿಜರು ಸಾಮಗಾನವನ್ನು ಮಾಡುವುದಿಲ್ಲ. ಆದ್ದರಿಂದ ಪ್ರಸ್ತೋತ್ರಾದಿಗಳನ್ನೇ ಬಹುವಚನದಿಂದ ತೆಗೆದುಕೊಳ್ಳಬೇಕು. ಪ್ರಸ್ತೋತ್ರಾದಿಗಳು ಅಂತರಂಗ, ಹದಿನಾರು ಮಂದಿ ಋತ್ವಿಜರು

ಬಹಿರಂಗ. ಬಹಿರಂಗಕ್ಕಿಂತ ಅಂತರಂಗವೇ ಶ್ರೇಷ್ಠವೆಂದು ಈ ಅಧಿಕರಣದಲ್ಲಿ ನಿರ್ಣಯಿಸಲಾಗಿದೆ. ಅದರಂತೆ ಪ್ರಕೃತದಲ್ಲಿಯೂ 'ಓದನ' ಪದದಿಂದ ಅಂತರಂಗ ಎನಿಸಿದ ಭೋಜ್ಯತ್ವವನ್ನೇ ಸ್ವೀಕರಿಸಬೇಕು.

**प्रकाशः** – सुधोक्तमुदाहरणानौचित्यं चाऽऽह – **अपिचेति** । ओदनोपसेचनपदाभ्यामत्तेत्यस्योपलक्षणणीयत्वेनोक्तत्वान्न साक्षादत्तेति श्रुतम्, ब्रह्मक्षत्रादिपदेन लक्षणया चराचरग्रहणस्योक्तत्वात् तदपि न साक्षाच्छ्रुतम् । अतोऽस्मदुदाहरणमेव सूत्रानुगुण्याद्युक्तमित्यर्थः ।

ಸುಧೆಯಲ್ಲಿ ಹೇಳಿದ ಅದ್ವೈತಿಗಳ ವಿಷಯವಾಕ್ಯದಲ್ಲಿರುವ ಅನೌಚಿತ್ಯವನ್ನು 'ಅಪಿಚ' ಎಂಬ ಗ್ರಂಥದಿಂದ ನಿರೂಪಿಸುತ್ತಿದ್ದಾರೆ. 'ಓದನ' ಮತ್ತು 'ಉಪಸೇಚನ' ಪದಗಳಿಂದ 'ಅತ್ತಾ' ಎಂಬುದು ಉಪಲಕ್ಷಣಯಾ ತಿಳಿದಿದೆ ಹೊರತು ನೇರವಾಗಿ ತಿಳಿದಿಲ್ಲ. ಬ್ರಹ್ಮ ಹಾಗೂ ಕ್ಷತ್ರಪದಗಳಿಂದ ಚರಾಚರ ಗ್ರಹಣವು ಲಕ್ಷಣಾವೃತ್ತಿಯಿಂದ ತಿಳಿಯುತ್ತಿದೆ ಹೊರತು ನೇರವಾಗಿ ತಿಳಿಯುವುದಿಲ್ಲ. ಆದ್ದರಿಂದ ನಾವು ಹೇಳಿದ ಉದಾಹರಣ ವಾಕ್ಯವೇ ಸೂತ್ರಕ್ಕೆ ಅನುಗುಣವಾಗಿದೆ ಎಂದರ್ಥ.

**प्रकाशः** – ननु त्वद्वाक्येऽपि सर्वपदस्यैव श्रवणाच्चराचरपदाश्रवणान्न सूत्रानुगुण्यमिति चेन्न, तस्य सङ्कोचनिवृत्त्यर्थं सर्वशब्दव्याख्यानाय चराचरेत्युक्तत्वादिति प्रागेवोक्तत्वादिति भावः । द्वितीयसूत्रार्थमप्यनूद्य निराह – **यच्चेति । उत्तरवाक्य इति ।**

अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमानेऽपि देहे । इत्यव्यवहितोत्तरवाक्ये ।

ನೀವು ಹೇಳುವ ವಿಷಯವಾಕ್ಯದಲ್ಲಿ ಸರ್ವಶಬ್ದವೇ ಕೇಳಿಸುತ್ತಿದೆ ಹೊರತು ಚರಾಚರಶಬ್ದವು ಕೇಳಿಸುತ್ತಿಲ್ಲ. ಆದ್ದರಿಂದ ಸೂತ್ರದ ಅನಾನುಗುಣ್ಯದೋಷವು ನಮ್ಮಂತೆ ನಿಮಗೂ ತಪ್ಪಿದ್ದಲ್ಲವೆಂಬ ಆಕ್ಷೇಪಕ್ಕೆ ಅವಕಾಶವಿಲ್ಲ. ಏಕೆಂದರೆ ಶ್ರುತಿಯಲ್ಲಿರುವ ಸರ್ವಶಬ್ದಕ್ಕೆ ಸಂಕೋಚ ಮಾಡಿ ಅರ್ಥವನ್ನು ಹೇಳಬಾರದೆಂಬ ಕಾರಣದಿಂದಲೇ ಸರ್ವಶಬ್ದಕ್ಕೆ ವ್ಯಾಖ್ಯಾನರೂಪವಾಗಿ ಸೂತ್ರದಲ್ಲಿ ಚರಾಚರ ಪದವನ್ನು ಪ್ರಯೋಗಿಸಿದ್ದಾರೆ. ಈ ವಿಷಯವನ್ನು ಈ ಹಿಂದೆಯೇ ಹೇಳಿದ್ದೇವೆ.

ಅದ್ವೈತಿಗಳ ಎರಡನೆ ಸೂತ್ರವ್ಯಾಖ್ಯಾನವನ್ನು ಅನುವಾದ ಮಾಡಿ ನಿರಾಕರಿಸುತ್ತಿದ್ದಾರೆ. 'ಯಚ್ಚ' ಇತ್ಯಾದಿ ವಾಕ್ಯದಿಂದ. 'ಉತ್ತರವಾಕ್ಯೇ' ಎಂದರೆ 'ಅಜೋ ನಿತ್ಯಃ ಶಾಶ್ವತೋಽಯಂ ಪುರಾಣೋ ನ ಹನ್ಯತೇ ಹನ್ಯಮಾನೇಽಪಿ ದೇಹೇ'' ಎಂಬ ಅವ್ಯವಹಿತವಾದ ಉತ್ತರವಾಕ್ಯದಲ್ಲಿ ಎಂದರ್ಥ.

**प्रकाशः** – उपलक्षणमेतत्, पूर्वत्रापि,

एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते ।

इति जीवस्यैव प्रथमान्ततया प्रकृतस्यान्वयाच्च, विपश्चित्त्वविशेषणेन प्रागुक्तज्ञानिन एवान्वयप्रतीतेश्च,

भावाभावौ न विदुषो यस्माज्जीवो न कश्चन ।

''न जायते म्रियते वाऽपि'' इत्यादिस्मृतिविरोधाच्चेत्यपि ध्येयम् ।

ಉಪಲಕ್ಷಣಯಾ ಇನ್ನೂ ಕೆಲವು ದೋಷಗಳನ್ನು ತಿಳಿಯಬೇಕು. ನೀವು ಹೇಳಿದ ವಿಷಯವಾಕ್ಯದ ಹಿಂದೆ 'ಏತದಾಲಂಬನಂ ಜ್ಞಾತ್ವಾ ಬ್ರಹ್ಮಲೋಕೇ ಮಹೀಯತೇ ।' ಬ್ರಹ್ಮನೇ ಜೀವನಿಗೆ ಆಶ್ರಯನಾಗಿದ್ದಾನೆಂದು ತಿಳಿದರೆ ಅಂತಹ ಜೀವನು ಬ್ರಹ್ಮಲೋಕದಲ್ಲಿ ಪೂಜ್ಯನಾಗುತ್ತಾನೆಂದು ಪ್ರಸಕ್ತವಾಗಿದೆ. ಹೀಗೆ 'ಏತತ್' ಎಂಬುದಾಗಿ ಜೀವನು ಪ್ರಥಮಾಂತಪದದಿಂದ ಪ್ರಕೃತನಾಗಿದ್ದಾನೆ. ಅವನ ಜೊತೆಗೆ ಅನ್ವಯ ಮಾಡುವುದೇ ಸಾಧುವಾಗಿದೆ. ಆದ್ದರಿಂದ ಅತ್ತೃತ್ವಗುಣವುಳ್ಳವನು ಜೀವನೆಂದೇ ನೀವು ಹೇಳಬೇಕು. ಮತ್ತು 'ವಿಪಶ್ಚಿತ್' ಎಂಬುದಾಗಿ ವಿಶೇಷಣವನ್ನು ಹೇಳಿದ್ದರಿಂದ ಹಿಂದೆ ಪ್ರಕೃತನಾದ ಜ್ಞಾನಿಯ ಅನ್ವಯವೇ ಪ್ರತೀತವಾಗುತ್ತದೆ. ಅಷ್ಟೇ ಅಲ್ಲದೆ ಬ್ರಹ್ಮನನ್ನು ವಿವಕ್ಷಿಸಿದಾಗ ''ಭಾವಾಭಾವೌ ನ ವಿದುಷೋ ಯಸ್ಮಾಜ್ಜೀವೋ ನ ಕಶ್ಚನ । ''ನ ಜಾಯತೇ ಮ್ರಿಯತೇ ವಾಽಪಿ'' ಇತ್ಯಾದಿ ಶ್ರುತಿಯ ವಿರೋಧವೂ ಸಹ ಬರುತ್ತಿದೆ ಎಂದು ತಿಳಿಯಬೇಕು.

**प्रकाशः** – परस्येदं नारभ्यमेवेति भावेनाह – **अत्रापीति** । न केवलं पूर्वत्रेत्यपेरर्थः ।

एतैनैतदेव वाक्यमुदाहृत्य शिवनिष्ठं संहर्तृत्वमिति वदतः कस्यचिन्मतं प्रत्युक्तं बोध्यं, विषयवाक्यानानुगुण्यादेरुक्तत्वादिति ।

ಅದ್ವೈತಿಗೆ ಈ ಅಧಿಕರಣವು ಅನಾರಂಭಣೀಯವಾಗಿದೆಯೆಂಬ ಅಭಿಪ್ರಾಯದಿಂದ 'ಅತ್ರಾಪಿ' ಇತ್ಯಾದಿ ವಾಕ್ಯವು ಹೊರಟಿದೆ. ಹಿಂದಿನ ಅಧಿಕರಣಗಳಷ್ಟೇ ಅಲ್ಲ ಎಂದಭಿಪ್ರಾಯ.

ಹೀಗೆ ಅದ್ವೈತಿಗಳನ್ನು ನಿರಾಕರಿಸಿದ್ದರಿಂದ ಶೈವರ ಮತವನ್ನೂ ಸಹ ನಿರಾಕರಿಸಿದಂತಾಯಿತು. ಅದ್ವೈತಿಗಳಂತೆ ಶೈವರೂ ಸಹ 'ಬ್ರಹ್ಮ ಕ್ಷತ್ರ ಚ' ಎಂಬುದನ್ನೇ ವಿಷಯವಾಕ್ಯವೆನ್ನುತ್ತಾರೆ. ಮತ್ತು ಸಂಹರ್ತೃತ್ವವು ಜೀವನಲ್ಲಿ ಬರುವುದಿಲ್ಲ. ಬ್ರಹ್ಮನಲ್ಲಿ ಬರುತ್ತದೆಂದು ಸಿದ್ಧಾಂತ ಮಾಡಿದ್ದಾರೆ. ಹೀಗೆ ಹೇಳುವ ಶೈವರಿಗೆ ವಿಷಯವಾಕ್ಯಕ್ಕೆ ಸೂತ್ರದಿಂದ ಅನಾನುಗುಣ್ಯವೇ ಮೊದಲಾದ ಅನೇಕ ದೋಷಗಳು ಬರುತ್ತವೆ. ಅದ್ವೈತಿಗಳಿಗಿಂತ ಹೆಚ್ಚಿನ ವಿಚಾರವನ್ನು ಹೇಳದ ಇವರನ್ನು ನಿರಾಕರಿಸಲು ಹೆಚ್ಚು ಮಾತುಗಳು ಬೇಕಾಗಿಲ್ಲ.

ಅತ್ರೃತ್ವಾಧಿಕರಣ (೧-೨-೨)




ಶಾಂಕರಭಾಷ್ಯದಲ್ಲಿ ಅತ್ತೃತ್ವವು ಭೋಕ್ತೃತ್ವರೂಪವಾಗಿದೆ. ಬ್ರಹ್ಮನು ಭೋಕ್ತೃವಲ್ಲದ ಕಾರಣ ಅತ್ತೃವಲ್ಲ ಎಂದು ಪೂರ್ವಪಕ್ಷ ಮಾಡಿ ಸಂಹಾರಕತ್ವವನ್ನೇ ಅತ್ತೃತ್ವವೆನ್ನಬೇಕು. ಸಂಹಾರಕತ್ವವು ಬ್ರಹ್ಮನ ಧರ್ಮವೆಂದು ಸಿದ್ಧಾಂತ ಮಾಡಲಾಗಿದೆ. ಇದು ತಪ್ಪು. ವಿಚಾರ ಮಾಡಿದರೆ ಸಂಹಾರಕರ್ತೃತ್ವವನ್ನೇ ಶುದ್ಧ ಬ್ರಹ್ಮನಲ್ಲಿ ಹೇಳಲು ಸಾಧ್ಯವಿಲ್ಲ. ಮಾಯಾವಿಶಿಷ್ಟಬ್ರಹ್ಮನಲ್ಲಿ ಸಂಹಾರಕರ್ತೃತ್ವವನ್ನು ಹೇಳಬೇಕು. ಅವನಲ್ಲಿ ಭೋಕ್ತೃತ್ವವೂ ಸಹ ಇದ್ದೇ ಇದೆ. ''ಅನಶ್ನನ್'' ಎಂಬ ಶ್ರುತಿಯು ಶುದ್ಧಬ್ರಹ್ಮನಲ್ಲಿ ಭೋಕ್ತೃತ್ವವನ್ನು ನಿಷೇಧ ಮಾಡುತ್ತಿದೆ. ಹೀಗೆ ಹೇಳಲು ಬರುವುದರಿಂದ ಅತ್ತೃತ್ವವು ಭೋಕ್ತೃತ್ವರೂಪವಲ್ಲ. ಸಂಹಾರ ಕರ್ತೃತ್ವವೆಂದು ಸಿದ್ಧಾಂತ ಮಾಡುವುದು ಹೇಗೆ ಸರಿ?

ಮತ್ತು ಸೂತ್ರದಲ್ಲಿ ಹೇಳಲ್ಪಟ್ಟ ಪ್ರತಿಜ್ಞಾವಾಕ್ಯದಿಂದ ಅಥವಾ ಹೇತುವಾಕ್ಯದಿಂದ ಸೂತ್ರಕ್ಕೆ ಆನುಗುಣ್ಯವೂ ಬರುವುದಿಲ್ಲ. ಆದರೆ ನಾವು ಉಲ್ಲೇಖಿಸಿದ 'ಸರ್ವಂ ವಾ ಅತ್ತಿ' ಎಂಬ ವಿಷಯವಾಕ್ಯದಲ್ಲಿ 'ಅತ್ತಾ' ಎಂಬ ಪದವಿದೆ. ಮತ್ತು 'ಸರ್ವಂ' ಎಂಬ ಪದವಿದೆ. ಇವುಗಳಿಂದ ಸೂತ್ರದಲ್ಲಿರುವ ಪ್ರತಿಜ್ಞಾಭಾಗ ಹಾಗೂ ಹೇತು ವಾಕ್ಯಗಳಿಗೆ ನೇರವಾಗಿ ಆನುಗುಣ್ಯವನ್ನು ಹೇಳಬಹುದು.

ಅದ್ವೈತಿಗಳು 'ಪ್ರಕರಣಾಚ್ಚ' ಎಂಬ ಎರಡನೆಯ ಸೂತ್ರಕ್ಕೆ ಹೀಗೆ ವ್ಯಾಖ್ಯಾನಿಸುತ್ತಾರೆ - ಈ ಮಂತ್ರಕ್ಕಿಂತ ಕೆಲವು ಮಂತ್ರಗಳ ಹಿಂದೆ 'ನ ಜಾಯತೇ ಮ್ರಿಯತೇ ವಾ ವಿಪಶ್ಚಿತ್' ಎಂದು ಬ್ರಹ್ಮನ ಪ್ರಸ್ತಾಪವಿರುವುದರಿಂದ ಈ ಪ್ರಕರಣದಿಂದ ಬ್ರಹ್ಮನೇ 'ಅತ್ತಾ' ಎಂದು ನಿರ್ಧಾರವಾಗುತ್ತದೆ.

''ನ ಜಾಯತೇ ಮ್ರಿಯತೇ ವಾ ವಿಪಶ್ಚಿತ್'' ಎಂಬ ವಾಕ್ಯದ ನಂತರ ''ನ ಹನ್ಯತೇ ಹನ್ಯಮಾನೇऽಪಿ'' ಎಂಬುದಾಗಿ ಜೀವನೂ ಸಹ ಪ್ರಸ್ತುತನಾಗಿದ್ದಾನೆ. ಆದ್ದರಿಂದ ಬ್ರಹ್ಮನೇ ಈ ಪ್ರಕರಣ ಪ್ರತಿಪಾದ್ಯನೆಂದು ಹೇಗೆ ನಿರ್ಣಯಿಸುತ್ತೀರಿ ?

ರಾಮಾನುಜರು ಈ ಎರಡು ಸೂತ್ರಗಳನ್ನು ಪ್ರತ್ಯೇಕ ಅಧಿಕರಣವೆಂದು ಪರಿಗಣಿಸಿಲ್ಲ. ಗುಹಾಧಿಕರಣದಲ್ಲೇ ಸೇರಿಸುತ್ತಾರೆ. ಆದ್ದರಿಂದ ಗ್ರಂಥಕಾರರು ರಾಮಾನುಜ ಮತವನ್ನು ಮುಂದೆಯೇ ನಿರಾಕರಿಸುತ್ತಾರೆ.



ಟೀಕೆಯ ಕಠಿಣಪದಾರ್ಥ

तात्पर्यचन्द्रिका

टीकाक्षरार्थस्तु – इति योजनायामस्ति चोद्यावकाश इति । यद्यपि "स यद्यदेव" इत्यत्र 'सः' इत्यस्य संवत्सराख्यचतुर्मुखपरत्वमेव बृहदारण्यकभाष्ये उक्तम्,

यद्यद्ब्रह्मासृजत्पूर्वं तत्तदत्ति जनार्दनः ।

इति स्मृतेः । उत्तरत्र "सोऽकामयत भूयसा यज्ञेन भूयो यजेय" इत्यादौ चतुर्मुखपरत्वदर्शनाच्च । पूर्वत्रापि "स तया वाचा तेनात्मना" इति प्रथमान्तोक्तमृत्युतोऽपि तृतीयान्तोक्तसंवत्सरस्याव्यवधानेन प्रकृतत्वाच्च । संवत्सरसृष्टमत्तुमेव मृत्योस्संवत्सरादनान्निवृत्ततया संवत्सरस्यैव स्रष्टृत्वस्योचितत्वाच्च ।

कर्तुरपि संवत्सरस्य भगवत्स्वातन्त्र्यविवक्षया 'तेन' इतिकरणत्वेन निर्दिष्टस्यापि 'सः' इति कर्तृत्वेन निर्देशोपपत्तेश्च ।

तथाऽपि समानविभक्तिकत्वं परामर्शे तन्त्रमिति भ्रमेण 'सः' इत्यनेन आदित्याख्यमृत्योरेव परामर्श इति पूर्वपक्षे पुल्लिङ्गानुपपत्तिचोद्यावकाशोऽस्त्येव ।

ननु तथाऽपि न चोद्यावकाशः, "स ऐक्षत" इत्यादौ पुल्लिङ्गेनैव तच्छब्देन 'मृत्युना' इति मृत्युशब्देन च प्रस्तुततया 'गुरोर्दारास्समागताः, ते पूज्याः' इत्यादाविव पुल्लिङ्गोपपत्तेः ।

नच "अशनाया हि मृत्युः" इति स्त्रीलिङ्गेन अशनायाशब्देन प्रस्तुतत्वात् 'सः' इति पुल्लिङ्गानुपपत्तिरिति वाच्यम्, तथात्वे सिद्धान्तेऽपि तदनुपपत्तेरिति चेत्,

उच्यते – दारखट्वादिशब्देषु पुल्लिङ्गस्त्रीलिङ्गादेश्शब्दसाधुतैव, न त्वर्थसाधुता । न चार्थसाधुत्वे सम्भवति शब्दसाधुत्वमात्रं युक्तम् । एवं चादितौ पुल्लिङ्गो

मृत्युशब्दोऽप्ययुक्तः । परमपुरुषे तु स्त्रीलिङ्गोऽप्यदितिशब्दः प्रकृत्यधिकरणन्यायेन युक्तः । तथा चस्ति चोद्यवकाश इति भावः ।

अदितिशब्दवाच्यमिति । अदितिशब्दप्रवृत्तिनिमित्तमित्यर्थः ।।

।। इति श्रीब्रह्मण्यतीर्थपूज्यश्रीपादशिष्यव्यासतीर्थविरचिता तात्पर्यचन्द्रिकायां अत्तृत्वाधिकरणं सम्पूर्णम् ।।

ಅನುವಾದ - ಟೀಕೆಯಲ್ಲಿ 'ಇತಿ ಯೋಜನಾಯಾಮಸ್ತಿ ಚೋದ್ಯಾವಕಾಶಃ' ಎಂದು ಹೇಳಿದ್ದಾರೆ. ಅಂದರೆ ಸ್ತ್ರೀಯಾಗಿರುವ ಅದಿತಿದೇವಿಯಲ್ಲಿ 'ಸಃ' ಎಂಬ ಪುಲ್ಲಿಂಗ ಪ್ರಯೋಗವು ಸಾಧುವೇ ? ಎಂದು ಪ್ರಶ್ನಿಸಿಕೊಂಡು ಭಾಷ್ಯಕಾರರೇ ಉತ್ತರಿಸಿದ್ದಾರೆ. ಭಾಷ್ಯದಲ್ಲಿ ಈ ಪ್ರಶ್ನೆ ಹುಟ್ಟಲು ಸಾಧ್ಯವೇ? ಎಂದು ಪ್ರಶ್ನಿಸಿಕೊಂಡು ಟೀಕೆಯಲ್ಲಿ 'ಅಸ್ತಿ ಚೋದ್ಯಾವಕಾಶಃ ಎಂದು ಉತ್ತರಿಸಿದ್ದಾರೆ. ಈ ಮಾತಿನ ಅಂತರ್ಯವನ್ನು ಹೀಗೆ ತಿಳಿಯಬೇಕು -

ಆಕ್ಷೇಪ - ವಸ್ತುತಃ "ಸಃ ಯದ್ಯದೇವ" ಎಂಬುದಾಗಿ 'ಸಂವತ್ಸರ' ಎಂಬ ಚತುರ್ಮುಖಬ್ರಹ್ಮನನ್ನು ಪರಾಮರ್ಶಿಸಬೇಕೆಂದು ಬೃಹದಾರಣ್ಯಕಭಾಷ್ಯದಲ್ಲಿ ಹೇಳಿದ್ದಾರೆ. ಮತ್ತು "ಯದ್ಯದ್ ಬ್ರಹ್ಮಾಸೃಜತ್ ಪೂರ್ವಂ ತತ್ತದತ್ತಿ ಜನಾರ್ದನಃ" ಎಂಬ ಸ್ಮೃತಿಯಿಂದಲೂ ಸಹ 'ಸಃ' ಎಂದರೆ ಚತುರ್ಮುಖನೇ ಹೇಳಲ್ಪಟ್ಟಿದ್ದಾನೆ. ಮತ್ತು ಮುಂದೆ "ಸೋಽಕಾಮಯತ ಭೂಯಸಾ ಯಜ್ಞೇನ ಭೂಯೋ ಯಜೇಯ" ಎಂಬುದಾಗಿ ಚತುರ್ಮುಖನೇ ಪ್ರತಿಪಾದ್ಯನಾಗಿದ್ದಾನೆ. ಹಿಂದೆಯೂ ಸಹ "ಸ ತಯಾ ವಾಚಾ ತೇನಾತ್ಮನಾ" ಎಂಬುದಾಗಿ ಪ್ರಥಮಾಂತವಾಗಿ ಪ್ರತಿಪಾದ್ಯವಾದ ಮೃತ್ಯುವಿಗಿಂತ ತೃತೀಯಾಂತವಾಗಿ ಹೇಳಲ್ಪಟ್ಟ ಸಂವತ್ಸರನೇ ಅವ್ಯವಹಿತನಾಗಿ ಪ್ರಕೃತನಾಗಿದ್ದಾನೆ. ಮತ್ತು ಸಂವತ್ಸರನಾದ ಚತುರ್ಮುಖನಿಂದ ಹುಟ್ಟುವ ಜಗತ್ತನ್ನು ತಿನ್ನುವುದಕ್ಕೋಸ್ಕರವೇ ಮೃತ್ಯುವಾದ ಪರಮಾತ್ಮನು ಸಂವತ್ಸರನನ್ನು ತಿನ್ನದೆ ಬಿಡುತ್ತಾನೆ. ಇದರಿಂದಲೂ ಸಂವತ್ಸರನ ಸ್ರಷ್ಟೃತ್ವವನ್ನೇ ಹೇಳುವುದು ಉಚಿತವಾಗಿದೆ.

ವಸ್ತುತಃ 'ಸಃ' ಎಂಬ ಪದದಿಂದ ಕರ್ತೃವನ್ನೇ ಪರಾಮರ್ಶಿಸಬೇಕು. ಆದರೆ 'ತೇನ' ಎಂಬ ಪದದಿಂದ ಇತಿಕರಣತ್ವೇನ ಪ್ರಸಕ್ತನಾದ ಸಂವತ್ಸರನನ್ನು ಪರಾಮರ್ಶಿಸಬಾರದು. ಆದರೂ ಸಹ ಭಗವಂತನ ಸ್ವಾತಂತ್ರ್ಯವನ್ನು ತಿಳಿಸುವ ಉದ್ದೇಶದಿಂದ ಇತಿಕರ್ತೃತ್ವೇನ ನಿರ್ದಿಷ್ಟನಾದ ಚತುರ್ಮುಖನನ್ನು 'ಸಃ' ಎಂದು ಪರಾಮರ್ಶಿಸಲಾಗಿದೆ. ಆದ್ದರಿಂದ ಚತುರ್ಮುಖನನ್ನು

ಪರಾಮರ್ಶಿಸಲು ಬರುವಾಗ ಪುಲ್ಲಿಂಗ ಪ್ರಯೋಗವು ಹೇಗೆ ಸರಿಯಾಗುತ್ತದೆ ? ಎಂಬ ಪ್ರಶ್ನೆಗೆ ಅವಕಾಶವೇ ಇಲ್ಲ. ಆದ್ದರಿಂದ ಭಾಷ್ಯಕಾರರು ಪ್ರಶ್ನಿಸಿದ್ದು ತಪ್ಪಲ್ಲವೇ?

ಸಮಾಧಾನ - ಪರಾಮರ್ಶ ಮಾಡಲು ಸಮಾನವಿಭಕ್ತಿಯೇ ತಂತ್ರವಾಗಿದೆಯೆಂಬ ಭ್ರಮೆಯು ಯಾರಿಗೆ ಇರುತ್ತದೋ ಅಂತಹವನಿಗೆ 'ಸಃ' ಎಂಬ ಪದದಿಂದ ಅದಿತಿಯೆನಿಸಿದ ಮೃತ್ಯುವನ್ನೇ ಪರಾಮರ್ಶ ಮಾಡಬೇಕು. ಹೀಗೆ ಪರಾಮರ್ಶಿಸಿದಾಗ ಪುಲ್ಲಿಂಗದಿಂದ ಅದಿತಿಯನ್ನು ಹೇಗೆ ಪರಾಮರ್ಶಿಸಲು ಸಾಧ್ಯ ? ಎಂಬ ಪ್ರಶ್ನೆಗೆ ಅವಕಾಶವಿದ್ದೇ ಇರುತ್ತದೆ.

ಆಕ್ಷೇಪ - ಪ್ರಶ್ನೆಗೆ ಅವಕಾಶವಿಲ್ಲ. ಏಕೆಂದರೆ ''ಸ ಐಕ್ಷತ'' ಇತ್ಯಾದಿ ಸ್ಥಳಗಳಲ್ಲಿ ಪುಲ್ಲಿಂಗವಾದ 'ತತ್' ಶಬ್ದದಿಂದ ಪ್ರಸ್ತುತವಾದ್ದರಿಂದ ಮತ್ತು 'ಮೃತ್ಯುನಾ' ಎಂಬುದಾಗಿ ಮೃತ್ಯುಶಬ್ದದಿಂದಲೂ ಪ್ರಸ್ತುತವಾದ್ದರಿಂದ ಪುಲ್ಲಿಂಗಪ್ರಯೋಗವು ತಪ್ಪಾಗುವುದಿಲ್ಲ. ''ಗುರೋರ್ದಾರಾಸ್ಸಮಾಗತಾಃ, ತೇ ಪೂಜ್ಯಾಃ'' ಎಂದು ಪ್ರಯೋಗಿಸುತ್ತಾರೆ. ವಸ್ತುತಃ 'ದಾರಾಃ' ಶಬ್ದವು ಸ್ತ್ರೀಯರನ್ನು ಹೇಳುವುದಾದರೂ ಪುಲ್ಲಿಂಗಶಬ್ದವಾದ್ದರಿಂದ 'ತೇ' ಎಂಬ ಪುಲ್ಲಿಂಗ ಶಬ್ದದಿಂದಲೇ ಅವರನ್ನು ಪರಾಮರ್ಶಿಸಲಾಗುತ್ತದೆ. ಅದರಂತೆ ಅದಿತಿದೇವಿಯು ಸ್ತ್ರೀ ಆಗಿದ್ದರೂ ಅವಳನ್ನು ಪ್ರತಿಪಾದಿಸುವ 'ತತ್' ಶಬ್ದ ಹಾಗೂ ಮೃತ್ಯು ಶಬ್ದಗಳು ಪುಲ್ಲಿಂಗದಲ್ಲಿರುವುದರಿಂದ 'ಸಃ' ಎಂಬುದಾಗಿ ಪುಲ್ಲಿಂಗನಿರ್ದೇಶವು ಯುಕ್ತವಾಗುತ್ತದೆ.

''ಅಶನಾಯಾ ಹಿ ಮೃತ್ಯುಃ' ಎಂಬಲ್ಲಿ ಸ್ತ್ರೀಲಿಂಗವಾದ ಅಶನಾಯ ಶಬ್ದದಿಂದ ಪ್ರಸ್ತುತಳಾದ್ದರಿಂದ 'ಸಃ' ಎಂಬ ಪುಲ್ಲಿಂಗ ಪ್ರಯೋಗವು ಹೇಗೆ ಸರಿಯಾಗುತ್ತದೆಂದು ಪ್ರಶ್ನಿಸಬಾರದು. ಈ ಅನುಪಪತ್ತಿಯು ಸಿದ್ಧಾಂತದಲ್ಲಿಯೂ ತಪ್ಪಿದ್ದಲ್ಲ. ಆದ್ದರಿಂದ ಭಾಷ್ಯಕಾರರು ಪ್ರಶ್ನೆ ಮಾಡಿರುವುದು ತಪ್ಪಲ್ಲವೆ?

ಸಮಾಧಾನ - ಈ ಆಕ್ಷೇಪವು ಸರಿಯಲ್ಲ. ದಾರಾ, ಖಟ್ವಾ ಮೊದಲಾದ ಶಬ್ದಗಳಲ್ಲಿ ಪುಲ್ಲಿಂಗ ಸ್ತ್ರೀಲಿಂಗಗಳ ನಿರ್ದೇಶವು ಶಬ್ದಸಾಧುತ್ವಕ್ಕೋಸ್ಕರ ಮಾತ್ರ ಹೊರತು ಅರ್ಥಸಾಧುತ್ವಕ್ಕೋಸ್ಕರವಲ್ಲ. ಅರ್ಥಸಾಧುತ್ವವನ್ನು ಹೇಳಲು ಬರುವಾಗ ಶಬ್ದಸಾಧುತ್ವವನ್ನು ಹೇಳುವುದು ಅಯುಕ್ತವಾಗಿದೆ. ಆದ್ದರಿಂದ ಅದಿತಿಯಲ್ಲಿ ಪುಲ್ಲಿಂಗ ಶಬ್ದವಾದ ಮೃತ್ಯುಶಬ್ದದ ಪ್ರಯೋಗವೂ ಸಹ ಅಯುಕ್ತವೇ ಆಗಿದೆ. ಆದರೆ ಪರಮ ಪುರುಷನಾದ ಭಗವಂತನಲ್ಲಿ ಸ್ತ್ರೀಲಿಂಗದಲ್ಲಿರುವ ಅದಿತಿಶಬ್ದವು ಅಯುಕ್ತವಲ್ಲ. ಪ್ರಕೃತ್ಯಧಿಕರಣನ್ಯಾಯದಿಂದ ಸಕಲ ಸ್ತ್ರೀವಾಚಕ ಶಬ್ದಗಳು ಭಗವಂತನನ್ನು ಪ್ರತಿಪಾದಿಸುತ್ತವೆಂದು ತಿಳಿಯಬೇಕು. ಆದ್ದರಿಂದ ಭಾಷ್ಯಕಾರರು ಮಾಡಿಕೊಂಡ ಪ್ರಶ್ನೆಯು ಸಾಧುವೇ ಆಗಿದೆ.

'ಅದಿತಿಶಬ್ದವಾಚ್ಯಂ' ಎಂಬ ಶಬ್ದಕ್ಕೆ ಅದಿತಿಶಬ್ದದ ಪ್ರವೃತ್ತಿನಿಮಿತ್ತವೆಂದರ್ಥ.

ಇಲ್ಲಿಗೆ ತಾತ್ಪರ್ಯಚಂದ್ರಿಕೆಯ ಕನ್ನಡಾನುವಾದದಲ್ಲಿ
ಅತ್ರತ್ವಾಧಿಕರಣವು ಸಂಪೂರ್ಣವಾಯಿತು.

**प्रकाशः –**

अत्र टीकायां पूर्वपक्षग्रन्थे ''स यद्यदेव'' इत्यत्र पुल्लिङ्गानुपपत्तिचोद्यं भाष्यकारीयमाक्षिप्य समाहितम् । तत्राक्षेपबीजप्रदर्शनपूर्वं तद्वाक्यं व्यनक्ति – **यद्यपीति ।**

ಶ್ರೀಮದಾಚಾರ್ಯರು ಭಾಷ್ಯದಲ್ಲಿ ಸ್ತ್ರೀಯಾದ ಅದಿತಿದೇವಿಯಲ್ಲಿ 'ಸಃ' ಎಂಬ ಪುಲ್ಲಿಂಗ ಪದದ ಪ್ರಯೋಗವು ಹೇಗೆ ಕೂಡುತ್ತದೆಂದು ಪ್ರಶ್ನಿಸಿಕೊಂಡು ಪುರುಷಶಕ್ತಿ ಇರುವುದರಿಂದ ಪುಲ್ಲಿಂಗ ಪ್ರಯೋಗವು ಸಾಧುವಾಗಿದೆಯೆಂದು ಉತ್ತರಿಸಿದ್ದಾರೆ.

ಆಚಾರ್ಯರ ಈ ಮಾತನ್ನು ಟೀಕೆಯಲ್ಲಿ ವಿಚಾರ ಮಾಡಿ 'ಅಸ್ತಿ ಚೋದ್ಯಾವಕಾಶಃ' ಎಂದು ಹೇಳಿದ್ದಾರೆ. ಅಂದರೆ ಪ್ರಶ್ನೆಗೆ ಅವಕಾಶವೇ ಇರುವುದಿಲ್ಲ. ಪ್ರಾರಂಭದಿಂದ ಮೃತ್ಯು ಹಾಗೂ ಸಂವತ್ಸರ ಇಬ್ಬರೂ ಸಹ ಪ್ರಸಕ್ತರಾಗಿದ್ದಾರೆ. ಆದರೆ ಸಂವತ್ಸರನೇ ಇಲ್ಲಿ ವಿವಕ್ಷಿತ. ಆದ್ದರಿಂದ ಸಂವತ್ಸರ ಶಬ್ದವು ಪುಲ್ಲಿಂಗದಲ್ಲಿರುವುದರಿಂದ ಶ್ರುತಿಯಲ್ಲಿ 'ಸಃ' ಎಂಬ ಪುಲ್ಲಿಂಗ ಪದದಿಂದ ಅವರನ್ನು ಪರಾಮರ್ಶಿಸಬಹುದು. ಹೀಗಿರುವಾಗ ಪ್ರಶ್ನೆಗೆ ಅವಕಾಶವೇ ಇಲ್ಲ. ಆದ್ದರಿಂದ ಆಚಾರ್ಯರು ಪ್ರಶ್ನೆಯನ್ನು ಮಾಡಿಕೊಂಡು ಸಮಾಧಾನ ನೀಡಿದ್ದು ತಪ್ಪಲ್ಲವೇ? ಎಂದು ಆಕ್ಷೇಪಿಸಿ ಸಮಾಧಾನವನ್ನು ನೀಡುವ ಗೀತಾ ವಾಕ್ಯವನ್ನುವ್ಯಾಖ್ಯಾನಿಸಲು ಹೊರಟಿದ್ದಾರೆ 'ಯದ್ಯಪಿ' ಇತ್ಯಾದಿ ಗ್ರಂಥದಿಂದ.

**प्रकाशः** – तद्भाष्योक्तस्मृतिमाह – **यद्यदिति । उत्तरत्रेति ।** 'सः' इत्यस्येत्यनुषज्यते । तच्छब्दस्य सन्निहितपरत्वात् चतुर्मुखस्य सन्निहितत्वात्तत्परत्वं युक्तमित्याह – **पूर्वत्रापीति ।**

ಚತುರ್ಮುಖ ಬ್ರಹ್ಮನೇ ಪೂರ್ವಪ್ರಸಕ್ತನಾಗಿದ್ದಾನೆಂದು ಅವರ ಭಾಷ್ಯದಲ್ಲೇ ಹೇಳಿದ ಸ್ಮೃತಿಯನ್ನು ಉಲ್ಲೇಖಿಸುತ್ತಿದ್ದಾರೆ. 'ಯದ್ಯದಿ' ಇತ್ಯಾದಿಯಾಗಿ. 'ಉತ್ತರತ್ರ' ಎಂಬ ಪದದ ಅನಂತರ 'ಸಃ' ಇತ್ಯಸ್ಯ ಎಂಬುದನ್ನು ಸೇರಿಸಿಕೊಳ್ಳಬೇಕು. 'ತತ್' ಶಬ್ದವು ಹಿಂದೆ ಹತ್ತಿರದಲ್ಲಿರುವುದನ್ನೇ ಪರಾಮರ್ಶಿಸುತ್ತದೆ. ಆದ್ದರಿಂದ ಮೃತ್ಯುವಿಗಿಂತ ಸಂವತ್ಸರನೇ ಅವ್ಯವಹಿತನಾಗಿ ಪೂರ್ವಪ್ರಸಕ್ತನಾಗಿದ್ದಾನೆ. ಆದ್ದರಿಂದ ಸಂವತ್ಸರನ ಪರಾಮರ್ಶವೇ ಯುಕ್ತವಾಗಿದೆಯೆಂದು 'ಪೂರ್ವತ್ರಾಪಿ' ಎಂಬ ವಾಕ್ಯದಿಂದ ಹೇಳುತ್ತಿದ್ದಾರೆ.

**प्रकाशः – संवत्सरसृष्टमिति ।** पूर्वत्र ''स ऐक्षत यदि ह वा इममभिमंस्ये कनीयोऽन्नं करिष्य इति । स तया वाचा तेनाऽऽत्मनेदꣳसर्वमसृजत'' इत्यनेन यदि इमं संवत्सरशब्दितं भक्षयामि तर्ह्यल्पमन्नं मे भविष्यति । अत एनमभक्षयित्वा तन्मुखेन सर्वसृष्टिङ्कारयित्वा तत्सृष्टमेव सर्वं भक्षयामीति बुद्ध्या तन्मुखेन

सर्वसर्जनात् भक्षणान्निवृत्तिरवश्यमवगम्यत इति तदन्यथानुपपत्या च चतुर्मुखपरत्वमित्यर्थः ।

ಗ್ರಂಥದಲ್ಲಿ 'ಸಂವತ್ಸರ ಸೃಷ್ಟಂ' ಎಂದಿದೆ. ಅಂದರೆ ಹಿಂದೆ "ಸ ಐಕ್ಷತ ಯದಿ ಹ ವಾ ಇಮಮಭಿಮಂಸ್ಯೇ. ಕನೀಯೋಽನ್ನಂ ಕರಿಷ್ಯ ಇತಿ । ಸ ತಯಾ ವಾಚಾ ತೇನೇಽಽತ್ಮನೇಂದ್ರಂಸರ್ವಮಸೃಜತ" ಎಂಬ ವಾಕ್ಯ ಪ್ರಸಕ್ತವಾಗಿದೆ. ಈ ವಾಕ್ಯದಲ್ಲಿ ಒಂದು ವೇಳೆ ಸಂವತ್ಸರನೆನಿಸಿದ ಚತುರ್ಮುಖನನ್ನು ನಾನು ತಿಂದು ಬಿಟ್ಟರೆ ಸ್ವಲ್ಪ ಮಾತ್ರ ಅನ್ನವನ್ನು ತಿಂದಂತಾಗುತ್ತದೆ. ಆದ್ದರಿಂದ ಚತುರ್ಮುಖನನ್ನು ನಾನು ತಿನ್ನಲಾರೆ. ಇವರ ಮುಖಾಂತರ ಸಮಸ್ತ ಜಗತ್ತನ್ನು ಸೃಷ್ಟಿ ಮಾಡಿಸಿ ಅವನು ಸೃಷ್ಟಿಸಿದ ಸಮಸ್ತ ಜಗತ್ತೆಲ್ಲವನ್ನು ತಿನ್ನುತ್ತೇನೆಂದು ಭಗವಂತನು ಇಚ್ಛಿಸಿದನು. ಹೀಗೆ ಚತುರ್ಮುಖನನ್ನು ತಿನ್ನಲು ಭಗವಂತನು ನಿವೃತ್ತನಾದನೆಂದು ಹಿಂದಿನ ವಾಕ್ಯದಿಂದ ತಿಳಿಯುತ್ತದೆ. ಇದನ್ನು ಕೂಡಿಸಬೇಕೆಂದರೆ 'ಸಃ' ಎಂಬ ಪದದಿಂದ ಚತುರ್ಮುಖನನ್ನೇ ಪರಾಮರ್ಶಿಸಬೇಕು.

**प्रकाशः** – ननु पूर्वं तस्य सन्निहितत्वेऽपि तृतीयया करणत्वेनैव निर्देशान्न कर्तृवाचिना परामर्शो युक्त इत्यत आह – **कर्तुरिति** । टीकोक्तं स्पष्टीकृत्य तदुपलक्षणमिति भावेन भाष्यं प्रकारान्तरेण स्वयमाक्षिप्य समाधत्ते – **ननु तथाऽपीति** ।

ಸಂವತ್ಸರನೆನಿಸಿದ ಚತುರ್ಮುಖನು ಸನ್ನಿಹಿತನಾಗಿರಬಹುದು. ಆದರೆ ಕರಣಾರ್ಥದಲ್ಲಿರುವ 'ತೇನ' ಎಂಬ ತೃತೀಯಾವಿಭಕ್ತಿಯಿಂದಷ್ಟೇ ಅವನನ್ನು ನಿರ್ದೇಶಿಸಲಾಗಿದೆ. ಆದ್ದರಿಂದ ಕರ್ತೃವಾಚಿಯಾದ 'ಸಃ' ಎಂಬ ಪದದಿಂದ ಸಂವತ್ಸರನನ್ನು ಪರಾಮರ್ಶಿಸಲು ಸಾಧ್ಯವಿಲ್ಲವೆಂಬ ಪ್ರಶ್ನೆಗೆ 'ಕರ್ತುಃ' ಎಂಬ ವಾಕ್ಯದಿಂದ ಉತ್ತರಿಸುತ್ತಿದ್ದಾರೆ. ಹೀಗೆ ಟೀಕೆಯ ಮಾತನ್ನು ಸ್ಪಷ್ಟಪಡಿಸಿ ಅದನ್ನು ಉಪಲಕ್ಷಣವೆಂದು ತಿಳಿದು ಭಾಷ್ಯಕಾರರ ಮಾತನ್ನು ಮತ್ತೊಂದು ಪ್ರಕಾರದಿಂದ ಸ್ವತಃ ಗ್ರಂಥಕಾರರೇ ಆಕ್ಷೇಪಿಸಿ ಸಮಾಧಾನವನ್ನು ಹೇಳುತ್ತಿದ್ದಾರೆ. 'ನನು ತಥಾಽಪಿ' ಇತ್ಯಾದಿಯಾಗಿ

**प्रकाशः** – कथं तर्हि विष्णावदितिशब्दप्रयोग इत्यत आह – **परमेति** । **पुरुषेति** हेतुगर्भम् । अदितेरित्यनेनैव तद्वाच्यत्वलाभाददितित्वमिति व्यर्थमित्यत आह – **अदितिशब्देति** । शिष्टं सुगममिति भावः ॥

**इति श्रीमत्सर्वतन्त्रस्वतन्त्रसुधीन्द्रतीर्थगुरुपादशिष्यराघवेन्द्रयतिकृते चन्द्रिकाप्रकाशे अत्तृत्वाधिकरणं सम्पूर्णम् ॥१॥**

ಅತ್ತೃತ್ವಾಧಿಕರಣ (೧-೨-೨)

ವಿವರಣೆ - ವಿಷ್ಣುವಿನಲ್ಲಿ ಅದಿತಿ ಶಬ್ದ ಪ್ರಯೋಗವು ಹೇಗೆ ಕೂಡುತ್ತದೆ ? ಎಂಬ ಪ್ರಶ್ನೆಗೆ 'ಪರಮಪುರುಷೇ' ಎಂಬುದರಿಂದ ಉತ್ತರಿಸಿದ್ದಾರೆ. 'ಪುರುಷ' ಎಂಬ ಪದವು ಹೇತುಗರ್ಭಿತವಾಗಿದೆ. 'ಅದಿತೇಃ' ಎಂಬುದರಿಂದಲೇ ಅದಿತಿಶಬ್ದವಾಚ್ಯತ್ವವು ತಿಳಿಯುವಾಗ ಪುನಃ 'ಅದಿತಿತ್ವಂ' ಎಂದೇಕೆ ಭಾಷ್ಯದಲ್ಲಿ ಹೇಳಿದರು? ಎಂಬ ಪ್ರಶ್ನೆಗೆ 'ಅದಿತಿಶಬ್ದಪ್ರವೃತ್ತಿನಿಮಿತ್ತಂ' ಎಂದು ಉತ್ತರಿಸಿದ್ದಾರೆ. ಉಳಿದ ಟೀಕೆಯ ಕಠಿಣಪದಾರ್ಥಗಳು ಸುಲಭವಾದ್ದರಿಂದ ಶಿಷ್ಯರೇ ಸ್ವತಃ ತಿಳಿದುಕೊಳ್ಳಬೇಕು.

ಇಲ್ಲಿಗೆ ಶ್ರೀರಾಘವೇಂದ್ರತೀರ್ಥಶ್ರೀಪಾದರಿಂದ ವಿರಚಿತವಾದ ಪ್ರಕಾಶಟಿಪ್ಪಣಿಯ ಕನ್ನಡಾನುವಾದದಲ್ಲಿ ಅತ್ತೃತ್ವಾಧಿಕರಣವು ಮುಕ್ತಾಯವಾಯಿತು.

* * * * * * *

ಶ್ರೀಕೃಷ್ಣಾರ್ಪಣಮಸ್ತು.




'ಸಃ ಯದ್ಯದೇವಾಸೃಜತ' ಎಂಬ ಬೃಹದಾರಣ್ಯಕ ವಾಕ್ಯವು ಈ ಅಧಿಕರಣಕ್ಕೆ ವಿಷಯಕವಾಗಿದೆ. ಈ ವಾಕ್ಯದಿಂದ ಅದಿತಿದೇವಿಯು ಪ್ರತಿಪಾದ್ಯಳಾದರೆ 'ಸಃ' ಎಂಬ ಪುಲ್ಲಿಂಗ ಪ್ರಯೋಗವು ಹೇಗೆ ಕೂಡುತ್ತದೆ. 'ಸಾ' ಎಂದು ಪ್ರಯೋಗಿಸಬೇಕಲ್ಲವೇ? ಎಂದರೆ ಹೌದು. ಆದರೆ ಪುರುಷ ಸಾಮರ್ಥ್ಯವನ್ನು ಸ್ತ್ರೀಯಾದ ಅದಿತಿದೇವಿಯು ಪಡೆದಿರುವುದರಿಂದ ಅವಳಲ್ಲಿ ಪುಲ್ಲಿಂಗ ಪ್ರಯೋಗವು ಕೂಡುತ್ತದೆ. ಗೀತೆಯಲ್ಲಿಯೂ ಸಹ ಲಕ್ಷ್ಮಿಯಲ್ಲಿ ಕೂಟಸ್ಥಃ ಎಂಬ ಪುಲ್ಲಿಂಗ ಪ್ರಯೋಗವು ಕಾಣಸುತ್ತದೆ. ಆದ್ದರಿಂದ ಅದಿತಿಗೂ 'ಸಃ' ಎಂದು ಹೇಳಿದ್ದು ತಪ್ಪಲ್ಲ. ಹೀಗೆ ಶ್ರೀಮದಾಚಾರ್ಯರು ಭಾಷ್ಯದಲ್ಲಿ ಪ್ರಶ್ನಿಸಿಕೊಂಡು ಉತ್ತರಿಸಿದ್ದಾರೆ.

ತತ್ತ್ವಪ್ರಕಾಶಿಕೆ ಹಾಗೂ ಚಂದ್ರಿಕೆಯಲ್ಲಿ ಭಾಷ್ಯದಲ್ಲಿ ಮಾಡಿಕೊಂಡ ಪ್ರಶ್ನೆಯು ಸಮಂಜಸವೋ? ಅಲ್ಲವೋ ? ಎಂದು ವಿಮರ್ಶಿಸಿ ಆಚಾರ್ಯರ ಪ್ರಶ್ನೆಯನ್ನು ಸಮರ್ಥಿಸಿದ್ದಾರೆ. 'ಸಃ ಯದ್ಯದೇವ' ಎಂಬ ವಾಕ್ಯದ ಹಿಂದೆ ಸಂವತ್ಸರನೆನಿಸಿದ ಚತುರ್ಮುಖನು ಪ್ರಸ್ತುತನಾಗಿದ್ದಾನೆ. ಅವನ ಪರಾಮರ್ಶವನ್ನೇ 'ಸಃ' ಎಂಬುದರಿಂದ ಮಾಡಬೇಕು. ಹೀಗಿರುವಾಗ ಪುಲ್ಲಿಂಗಪ್ರಯೋಗ ಹೇಗೆ ? ಎಂಬ ಪ್ರಶ್ನೆ ಉದ್ಭವಿಸುವುದಿಲ್ಲವೆಂಬ ಶಂಕೆ ಬರುತ್ತದೆ. ಆದರೆ ಮೃತ್ಯುವೆನಿಸಿದ ಅದಿತಿದೇವಿಯೇ ಹಿಂದೆ ಪ್ರಸಕ್ತಳಾಗಿದ್ದಾಳೆ. ಅವಳ ಪರಾಮರ್ಶವನ್ನೇ ಇಲ್ಲಿ 'ಸಃ' ಎಂಬ ಪದದಿಂದ ಮಾಡಬೇಕು. ಆದ್ದರಿಂದ ಆಚಾರ್ಯರು ಮಾಡಿಕೊಂಡ ಪ್ರಶ್ನೆ ಸಮಂಜಸವೇ ಆಗಿದೆ.

ಪರಿಪೂರ್ಣಚಂದ್ರಿಕಾ

# ೦೨- ಅತ್ತೃತ್ವಾಧಿಕರಣ

## ಭಾಗ -೩

ನ್ಯಾಯವಿವರಣ, ನ್ಯಾಯವಿವರಣಪಂಚಿಕಾ,
ಅಣುಭಾಷ್ಯ, ತತ್ವಮಂಜರೀ,
ತಂತ್ರದೀಪಿಕಾ, ನ್ಯಾಯಮುಕ್ತಾವಳಿಃ,
ಸೂತ್ರಾರ್ಥರತ್ನಾವಳಿಃ

॥ ಶ್ರೀಗುರುಭ್ಯೋ ನಮಃ ॥

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# न्यायविवरणम्

श्री जयतीर्थविरचिता

# न्यायविवरणपञ्चिका

## अत्तृत्वाधिकरणम् - २

**ॐ अत्ता चराचरग्रहणात् ॐ ॥ १-२-९ ॥**

**ॐ प्रकरणात् ॐ ॥ १-२-१० ॥**

**सन्दिग्धश्रुतिलिङ्गाभ्यां निश्चितलिङ्गप्रकरणयोरेव बलवत्त्वम् ।**

**सन्दिग्धा श्रुतिर्लिङ्गं चादितिशब्दोऽदितित्वं च ॥**

ನ್ಯಾಯವಿವರಣೆ

ದೇವಮಾತೆಯಾದ ಅದಿತಿಯೇ ಅದಿತಿಶ್ರುತಿಯ ಬಲದಿಂದ 'ಅತ್ತಾ' ಎನಿಸುತ್ತಾಳೆ. ವಿಷ್ಣುವಿನಲ್ಲಿ ಅಸಂಭಾವಿತವಾದ ಲಿಂಗಗಳನ್ನೂ ಸಹ ಈ ಶ್ರುತಿಯಲ್ಲಿ ಹೇಳುವುದರಿಂದ ಅದಿತಿಯೇ 'ಅತ್ತಾ' ಎನಿಸುತ್ತಾಳೆಂದು ಪೂರ್ವಪಕ್ಷ.

ಇದು ತಪ್ಪು. ಚರಾಚರಾತ್ತೃತ್ವಲಿಂಗದಿಂದ ಹಾಗೂ ಪ್ರಕರಣದಿಂದ ವಿಷ್ಣುವೇ 'ಅತ್ತಾ' ಎನಿಸುತ್ತಾನೆಂದು ಸಿದ್ಧಾಂತ.

ಶ್ರುತಿಲಿಂಗಗಳಿಗಿಂತ ಲಿಂಗ ಪ್ರಕರಣಗಳು ದುರ್ಬಲವಾಗಿವೆಯೆಂದು ಸಿದ್ಧಾಂತದ ಮೇಲೆ ಬರುವ ಪ್ರಶ್ನೆಗೆ ಉತ್ತರಿಸುವುದಕ್ಕಾಗಿ 'ಸಂದಿಗ್ಧಶ್ರುತಿಲಿಂಗಾಭ್ಯಾಂ' ಇತ್ಯಾದಿ ವಾಕ್ಯಗಳು ಹೊರಟಿವೆ. ಸಾವಕಾಶಗಳಾದ್ದರಿಂದ ಶ್ರುತಿಲಿಂಗಗಳು ಸಂದಿಗ್ಧವಾಗಿವೆ. ನಿರವಕಾಶಗಳಾದ್ದರಿಂದ ಲಿಂಗಪ್ರಕರಣಗಳು ನಿಶ್ಚಿತವಾಗಿವೆ. ಸಂದಿಗ್ಧವಾದ ಶ್ರುತಿಲಿಂಗಗಳಿಗಿಂತ ನಿಶ್ಚಿತವಾದ ಲಿಂಗಪ್ರಕರಣಗಳೇ ಬಲಿಷ್ಠ. ಸಂದಿಗ್ಧವಾದ ಶ್ರುತಿ ಎಂದರೆ ಅದಿತಿಶಬ್ದ. ಸಂದಿಗ್ಧವಾದ ಲಿಂಗವೆಂದರೆ ಅದಿತಿತ್ವವೆಂದು ತಿಳಿಯಬೇಕು.

ಪರಿಪೂರ್ಣಚಂದ್ರಿಕಾ

देवमातैवात्र प्रतिपाद्या, तच्छ्रुतेः । नच श्रुतिरिन्द्रादिश्रुतिवद् विष्णौ सावकाशेति वाच्यम् । तत्राऽसम्भावितलिङ्गस्याऽपि सत्त्वादिति प्राप्ते, चराऽचराऽत्तृत्वलिङ्गात् प्रकरणाच्च, विष्णुरेवेति सिद्धान्तितम् ।

तदयुक्तम्, श्रुतिलिङ्गाभ्यां लिङ्गप्रकरणयोर्दुर्बलत्वादित्यत आह – **सन्दिग्धेति ।।** श्रुतिलिङ्गे हि सन्दिग्धे, सावकाशत्वात् लिङ्गप्रकरणे तु निश्चिते, निरवकाशत्वात् । सन्दिग्धाच्च निश्चितं बलवत् । तत्कुतो निर्णयाभावः? के ते सन्दिग्धश्रुतिलिङ्गे इत्यत आह – **सन्दिग्धा श्रुतिरिति ।।**

ದೇವಮಾತೆಯಾದ ಅದಿತಿದೇವಿಯೇ ಇಲ್ಲಿ ಪ್ರತಿಪಾದ್ಯಳು. ಏಕೆಂದರೆ ಅದಿತಿಯನ್ನು ಪ್ರತಿಪಾದಿಸುವ ಶ್ರುತಿಯಿರುವುದರಿಂದ. ಅದಿತಿಶ್ರುತಿಯನ್ನು ಇಂದ್ರಾದಿಶ್ರುತಿಗಳಂತೆ ವಿಷ್ಣುವಿನಲ್ಲಿ ಸಾವಕಾಶವೆನ್ನಬಾರದು. ವಿಷ್ಣುವಿನಲ್ಲಿ ಅಸಂಭಾವಿತವಾದ ಲಿಂಗಗಳನ್ನು ಅದಿತಿ ಶ್ರುತಿಗಳಲ್ಲಿ ಹೇಳಲಾಗಿದೆ. ಇಷ್ಟು ಪೂರ್ವಪಕ್ಷ. ಚರಾಚರಾತ್ತೃತ್ವವೆಂಬ ಲಿಂಗ ಹಾಗೂ ಪ್ರಕರಣಗಳ ಬಲದಿಂದ ವಿಷ್ಣುವೇ ಅದಿತಿಶ್ರುತಿಪ್ರತಿಪಾದ್ಯನೆಂದು ಸಿದ್ಧಾಂತ.

ಇದು ತಪ್ಪು. ಶ್ರುತಿ ಲಿಂಗಗಳಿಗಿಂತ ಲಿಂಗಪ್ರಕರಣಗಳು ದುರ್ಬಲವಾಗಿವೆ. ದುರ್ಬಲವಾದ ಪ್ರಮಾಣಗಳಿಂದ ವಿಷ್ಣುವೇ ಪ್ರತಿಪಾದ್ಯನೆಂದು ಹೇಗೆ ನಿರ್ಣಯಿಸುತ್ತೀರಿ? ಎಂಬ ಪ್ರಶ್ನೆಗೆ 'ಸಂದಿಗ್ಧ' ಇತ್ಯಾದಿ ವಾಕ್ಯದಿಂದ ಆಚಾರ್ಯರು ಉತ್ತರಿಸುತ್ತಿದ್ದಾರೆ. ಶ್ರುತಿ ಹಾಗೂ ಲಿಂಗಗಳು ಸಾವಕಾಶಗಳಾದರಿಂದ ಸಂದಿಗ್ಧವಾಗಿವೆ. ಲಿಂಗ ಮತ್ತು ಪ್ರಕರಣಗಳು ನಿರವಕಾಶಗಳಾದ್ದರಿಂದ ನಿಶ್ಚಿತವಾಗಿದೆ. ಸಾವಕಾಶಕ್ಕಿಂತ ನಿರವಕಾಶವೇ ಬಲಿಷ್ಠವಾಗಿರುವಾಗ ನಿರ್ಣಯಿಸಲು ಬರುವುದಿಲ್ಲವೆಂದು ಹೇಗೆ ಹೇಳುತ್ತಿರಿ? ಸಂದಿಗ್ಧವಾದ ಶ್ರುತಿಗಳು ಯಾವುದೆಂಬುದನ್ನು 'ಸಂದಿಗ್ಧಾ ಶ್ರುತಿಃ' ಎಂಬುದರಿಂದ ಹೇಳುತ್ತಿದ್ದಾರೆ.

लिङ्गं च सन्दिग्धमिति ग्राह्यम् । यथासङ्ख्यं सम्बन्धः । भवत्वदितिशब्दो देवमातुः श्रुतिः, 'अदितिर्देवतामयी' इत्यादौ प्रयोगाद्, विष्णौ सावकाशाच्च । अदितित्वं तु कथं लिङ्गम्? कथं च सावकाशम्? इति चेदुच्यते । अदितेरदितित्वमिति हि श्रूयते । 'त्व'प्रत्ययश्च जातेर्वाचकः, यथा – पृथिवीत्वं, गोत्वमित्यादौ । तदसम्भवे स्वरूपस्यैव । यथा आकाशत्वं, चन्द्रत्वमित्यादौ । नाचादितित्वं नाम जातिः सम्भवति, व्यक्तेरभेदात् । ततोऽदितित्वमदितेः स्वरूपमेव । नच

अदितिस्वरूपमीश्वरस्य सम्भवति, अत्यन्तभिन्नत्वात् । नच अदितिशब्दो भगवत्पर इत्यनुपपत्त्यभावः, अदितित्वेनाऽदितिशब्दस्य तत्र विधित्सितत्वेनानुवादानुपपत्तेः । अन्यथा अन्योन्याश्रयप्रसङ्गादिति पूर्वपक्षी मन्यते । सिद्धान्तिनस्त्वयमाशयः, भावे हि 'त्व'प्रत्ययः स्मर्यते । तद्धितभावश्च शब्दप्रवृत्तिनिमित्तम् । तच्च कचिज्जातिः, कचित् क्रिया, कचिद् गुणः, कचिद् द्रव्यम्, कचित् स्वरूपम् । तत्र यत् सर्वात्तृत्वमुक्तम्, तददितित्वं अदितिशब्दप्रवृत्तिनिमित्तमिति क्रियाशब्दत्वमस्योच्यते । अदितेरिति च भाविनी सञ्ज्ञा विज्ञायते । यथा 'अस्य सूत्रस्य शाटकं वया' इति । अन्यथा परस्यापि दुर्घटमेतत् । अविवक्षितनिमित्तां प्रसिद्धिमाश्रित्य ममानुवाद इति चेन्ममापि तत्समम् । इयांस्तु विशेषः । परस्य लौकिकी प्रसिद्धिः, मम तु वैदिकीति ।।

'ಲಿಂಗಂಚ ಸಂದಿಗ್ಧಃ' ಎಂಬುದನ್ನು ಇಟ್ಟುಕೊಳ್ಳಬೇಕು. ಯಥಾಸಂಖ್ಯವಾಗಿ ಸಂಬಂಧವನ್ನು ತಿಳಿಯಬೇಕು. ಅದಿತಿಶಬ್ದವು ದೇವಮಾತೆಯಾದ ಅದಿತಿಯನ್ನು ಪ್ರತಿಪಾದಿಸಲಿ 'ಅದಿತಿದೇರ್ವತಾಮಯೀ' ಎಂಬ ಪ್ರಯೋಗವಿರುವುದರಿಂದ. ವಿಷ್ಣುವಿನಲ್ಲಿ ಸಾವಕಾಶವೂ ಆಗಲಿ; ಆದರೆ ಅದಿತಿತ್ವ ಎಂಬುದು ಹೇಗೆ ಲಿಂಗವಾಗುತ್ತದೆ. ಹೇಗೆ ತಾನೆ ಸಾವಕಾಶವಾಗುತ್ತದೆ? ಎಂಬ ಪ್ರಶ್ನೆಗೆ ಹೀಗೆ ಉತ್ತರಿಸಬೇಕು, 'ಅದಿತೇರದಿತಿತ್ವಂ' ಎಂದು ಶ್ರುತಿಯಲ್ಲೇ ಹೇಳಲಾಗಿದೆ. 'ತ್ವ' ಪ್ರತ್ಯಯವು ಜಾತಿವಾಚಕವಾಗಿದೆಯೆಂದು ಪೃಥಿವೀತ್ವಂ, ಗೋತ್ವಂ ಇತ್ಯಾದಿ ಸ್ಥಳಗಳಲ್ಲಿ ಕಂಡಿದೆ. ಜಾತಿವಾಚಕವಲ್ಲವೆಂದು ಹೇಳಿದರೆ ಸ್ವರೂಪಪರವಾಗುತ್ತದೆ. ಆಕಾಶತ್ವಂ, ಚಂದ್ರತ್ವಂ ಇತ್ಯಾದಿ ಸ್ಥಳಗಳಲ್ಲಿರುವ 'ತ್ವ' ಪ್ರತ್ಯಯವು ವ್ಯಕ್ತಿಯು ಒಂದೇ ಆಗಿರುವುದರಿಂದ ಸ್ವರೂಪವೆಂಬರ್ಥವನ್ನು ಹೇಳುತ್ತದೆ. ಅದರಂತೆ ಅದಿತಿತ್ವ ಎಂಬಲ್ಲಿರುವ 'ತ್ವ' ಪ್ರತ್ಯಯವೂ ಸಹ ಜಾತಿಯನ್ನು ಹೇಳುವುದಿಲ್ಲ. ಅದಿತಿ ಒಬ್ಬಳೇ ಆಗಿರುವುದರಿಂದ ಅದಿತಿತ್ವ ಎಂದರೆ ಅದಿತಿಸ್ವರೂಪ ಎಂದೇ ಹೇಳಬೇಕು. ಈ ಅದಿತಿಸ್ವರೂಪವನ್ನು ವಿಷ್ಣುವಿನಲ್ಲಿ ಹೇಳಲಾಗದು. ಅದಿತಿದೇವಿಗೂ ಹಾಗೂ ವಿಷ್ಣುವಿಗೂ ಅತ್ಯಂತ ಭೇದವೇ ಇರುವುದರಿಂದ.

ಇನ್ನು ಅದಿತಿ ಶಬ್ದವು ಭಗತ್ಪರವೆಂದು ಹೇಳಿದಾಗ ಅನುಪಪತ್ತಿ ಇಲ್ಲವೆಂದು ಹೇಳಬಾರದು. ಅದಿತಿತ್ವವುಳ್ಳ ಅದಿತಿಯನ್ನೇ ವಿಧಿಸಲು ಇಚ್ಛೆ ಇರುವುದರಿಂದ ಅನುವಾದವೆನ್ನಲಾಗದು. ಹೀಗೊಪ್ಪದಿದ್ದರೆ ಅನ್ಯೋನ್ಯಾಶ್ರಯದೋಷ ಬರುತ್ತದೆ. ಹೀಗೆ ಪೂರ್ವಪಕ್ಷಿಯು ಭಾವಿಸುತ್ತಾನೆ. ಆದರೆ ಸಿದ್ಧಾಂತಿಯ ಅಭಿಪ್ರಾಯ ಹೀಗಿದೆ - ಭಾವಾರ್ಥದಲ್ಲಿ 'ತ್ವ' ಪ್ರತ್ಯಯವು ವ್ಯಾಕರಣದಿಂದ ಸಿದ್ಧವಾಗಿದೆ.

ತದ್ಧಿತಭಾವವೇ ಶಬ್ದಪ್ರವೃತ್ತಿಗೆ ನಿಮಿತ್ತವಾಗಿದೆ. ಅದು ಕೆಲವೆಡೆ ಜಾತಿರೂಪವಾಗಿರುತ್ತದೆ. ಕೆಲವೆಡೆ ಕ್ರಿಯಾರೂಪವಾಗಿ, ಕೆಲವೆಡೆ ಗುಣರೂಪವಾಗಿ, ಕೆಲವೆಡೆ ದ್ರವ್ಯರೂಪವಾಗಿ, ಇನ್ನೂ ಕೆಲವೆಡೆ ಸ್ವರೂಪಪರವಾಗಿ ಇರುತ್ತದೆ. ಪ್ರಕೃತ ಶ್ರುತಿಯಲ್ಲಿ ಹೇಳಲ್ಪಟ್ಟ ಸರ್ವಾತ್ತೃತ್ವವೇ ಅದಿತಿತ್ವ ಎನಿಸುತ್ತದೆ. ಅದಿತಿಶಬ್ದದ ಪ್ರವೃತ್ತಿನಿಮಿತ್ತವೂ ಸಹ ಇದೇ ಆಗಿದೆ. ಸರ್ವಾತ್ತೃತ್ವವು ಕ್ರಿಯಾರೂಪವಾದ ಪ್ರವೃತ್ತಿನಿಮಿತ್ತವೆಂದು ತಿಳಿಯಬೇಕು. ಅದಿತೇಯ ಎಂಬುದು ಸಂಜ್ಞಾರೂಪವಾಗಿದೆ. 'ಅಸ್ಯ ಸೂತ್ರಸ್ಯ ಶಾಟಕಂ ವಯಾ' ಎಂಬಂತೆ ಹೀಗೊಪ್ಪದಿದ್ದರೆ ಪರನೂ ಸಹ ಹೀಗೆಯೇ ಒಪ್ಪಬೇಕು. ಪ್ರವೃತ್ತಿನಿಮಿತ್ತವನ್ನು ವಿವಕ್ಷಿಸದೇ ಕೇವಲ ಲೋಕಪ್ರಸಿದ್ಧಿಯನ್ನಷ್ಟೇ ಅನುಸರಿಸಿ ಅನುವಾದವೆಂದು ಪರನು ಉತ್ತರಿಸುವುದಾದರೆ ನಮಗೂ ಇದು ಸಮಾನವಾಗಿದೆ. ಇಷ್ಟು ಮಾತ್ರ ವ್ಯತ್ಯಾಸ. ಪರನಿಗೂ ಲೌಕಿಕಪ್ರಸಿದ್ಧಿಯನ್ನು ಹೇಳುತ್ತಾನೆ. ನಾವು ವೈದಿಕಪ್ರಸಿದ್ಧಿಯನ್ನು ಹೇಳುತ್ತೇವೆ.

ಶ್ರೀಜಯತೀರ್ಥಭಿಕ್ಷುಗಳಿಂದ ರಚಿತವಾದ ನ್ಯಾಯವಿವರಣೆಯ ಟೀಕೆಯ
ಕನ್ನಡಾನುವಾದದಲ್ಲಿ ಅತ್ತೃತ್ವಾಧಿಕರಣವು ಸಮಾಪ್ತವಾಯಿತು.

***

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# अणुभाष्यम्

## अत्तृत्वाधिकरणम् - २

अत्ता

ಅಣುಭಾಷ್ಯ - ಭಗವಂತನೇ ಸಕಲ ಸಂಹಾರಕನು.

श्री राघवेन्द्रतीर्थविरचिता

# तत्वमञ्जरी

## अत्तृत्वाधिकरणम् -२

नन्वथापि यदुक्तं 'सर्वकर्ता विष्णुरेव' इत्यत्र सर्वसम्बन्धिजन्मस्थितिलयकर्तृत्वं विष्णोः, तदयुक्तम् । 'सर्वं वा अत्तीति तददितेरदितित्वम्' इति काण्वश्रुतौ अदितेरेव सर्वात्तृरूपसंहर्तृत्वोक्तेरित्यतः प्राप्तम् – अत्तेत्यादिसूत्रद्वयम् ।।

ಜನ್ಮಾದ್ಯಧಿಕರಣದಲ್ಲಿ 'ವಿಷ್ಣುವೇ ಸರ್ವಕರ್ತಾ' ಎಂದು ಮತ್ತು ಸಕಲ ವಸ್ತುಗಳ ಸೃಷ್ಟಿ, ಸ್ಥಿತಿ ಮತ್ತು ಲಯಗಳಿಗೆ 'ಕರ್ತಾ' ಎಂದು ನಿಶ್ಚಯಿಸಲಾಯಿತು. ಇದು ತಪ್ಪು. 'ಸರ್ವಂ ವಾ ಅತ್ತೀತಿ, ತದದಿತೇರದಿತಿತ್ವಮ್' ಎಂಬ ಕಾಣ್ವಶ್ರುತಿಯಲ್ಲಿ ಸರ್ವಾತ್ತೃತ್ವರೂಪವಾದ ಸಂಹಾರಕರ್ತೃತ್ವವನ್ನು ಅದಿತಿಗೆ ಹೇಳಿದೆಯಲ್ಲವೆ ? ಎಂಬ ಪ್ರಶ್ನೆಗೆ ಉತ್ತರಿಸುವುದಕ್ಕಾಗಿ 'ಅತ್ತಾ ಚರಾಚರಗ್ರಹಣಾತ್' 'ಪ್ರಕರಣಾಚ್ಚ' ಎಂಬೆರಡು ಸೂತ್ರಗಳು ಹೊರಟಿವೆ.

**तदर्थः– अत्तेति ।। 'एको विष्णुरेव' इति, 'लिङ्गैः सर्वैर्युतः स हि' इति च अन्वेति । 'सर्वमत्ति' इत्यत्रोक्तः सः प्राक् 'सर्वकर्ता' इत्यत्र संहर्तृत्वेनोक्तो विष्णुरेव, न त्वदितिः । कुतः? लिङ्गैः सर्वैर्युतो हीति ।।**

ಈ ಎರಡು ಸೂತ್ರಗಳ ಅರ್ಥವನ್ನೇ ಅಣುಭಾಷ್ಯದಲ್ಲಿ 'ಅತ್ತಾ' ಎಂಬುದಾಗಿ ಸಂಗ್ರಹಿಸಿದ್ದಾರೆ. 'ಏಕೋ ವಿಷ್ಣುರೇವ' ಎಂಬುದನ್ನು ಮತ್ತು 'ಲಿಂಗೈಃ ಸರ್ವೈರ್ಯುತಃ ಸ ಹಿ' ಎಂಬುದನ್ನು ಇಲ್ಲಿಯೂ ಸಹ ಅನ್ವಯಿಸಿಕೊಳ್ಳಬೇಕು. 'ಸರ್ವಮತ್ತಿ' ಇತ್ಯಾದಿಯಾಗಿ ಶ್ರುತಿಯಲ್ಲಿ ಹೇಳಲ್ಪಟ್ಟ ಸರ್ವಸಂಹಾರಕನು ವಿಷ್ಣುವೇ ಆಗಿದ್ದಾನೆ. 'ಸರ್ವಕರ್ತಾ' ಎಂಬಲ್ಲಿ ಹೇಳಲ್ಪಟ್ಟವನೂ ಸಹ ವಿಷ್ಣುವೇ ಆಗಿದ್ದಾನೆ ಹೊರತು ಅದಿತಿಯಲ್ಲ. ಏಕೆ ? ಎಂಬ ಪ್ರಶ್ನೆಗೆ 'ಲಿಂಗೈಃ ಸರ್ವೈರ್ಯುತೋ ಹಿ' ಎಂಬುದಾಗಿ ಉತ್ತರಿಸಿದ್ದಾರೆ.

हिर्हेतौ । सर्वमत्तीत्युक्तासङ्कुचितसर्वात्तृत्व 'नैवेह किञ्चनाग्र आसीन्मृत्युनैवेदमावृतमासीद्' इत्यादिवाक्योक्तलयवर्तित्व-अप्संवत्सरस्रष्टृत्व-एतैर्लिङ्गैर्युतोऽत्ता विष्णुरेव । तेषां भाष्योक्तदिशा वैष्णवत्वप्रसिद्धेरिति वा । अत्र एक इत्युक्तिः

किञ्चिदत्त्री अदितिः किञ्चिदत्ता हरिरिति न शङ्क्यम्, सर्वस्यात्ता हरिरेक एवेति वक्तुम् ।

'ಹಿ' ಶಬ್ದವು ಹೇತು ಎಂಬರ್ಥದಲ್ಲಿದೆ. 'ಸರ್ವಮತ್ತಿ' ಎಂದು ಹೇಳಿದಾಗ ಅಸಂಕುಚಿತವಾದ ಸರ್ವಂಸಂಹಾರಕರ್ತೃತ್ವವು ವಿಷ್ಣುವಿನಲ್ಲೇ ಇರುತ್ತದೆ. 'ನೈವೇಹ ಕಿಂಚಾನಾಗ್ರೇ ಆಸೀನ್ಮೃತ್ಯುನೈವೇದ-ಮಾವೃತಮಾಸೀದ್'' ಎಂಬ ಶ್ರುತಿಯಲ್ಲಿ ಹೇಳಲ್ಪಟ್ಟ ಲಯವರ್ತಿತ್ವ-ಅಪ್ ಸ್ರಷ್ಟೃತ್ವ ಮತ್ತು ಸಂವತ್ಸರಸ್ರಷ್ಟೃತ್ವ ಮೊದಲಾದ ಲಿಂಗಗಳಿಂದೆಲ್ಲಾ ಯುಕ್ತವಾದವನು ವಿಷ್ಣುವೇ ಆಗಿದ್ದಾನೆ. ಭಾಷ್ಯದಲ್ಲಿ ಹೇಳಿದ ಪ್ರಕಾರ ಇಲ್ಲಿ ಹೇಳಿದ ಎಲ್ಲಾ ಲಿಂಗಗಳು ವಿಷ್ಣುವಿನಲ್ಲೇ ಇರುತ್ತವೆಂದು ನಿರ್ಣಯವಾಗಿದೆ. 'ಏಕ' ಎಂದು ಹೇಳಿದ್ದರಿಂದ ಕೆಲವನ್ನು ಅದಿತಿಯು ಇನ್ನು ಕೆಲವನ್ನು ವಿಷ್ಣುವು ಸಂಹಾರ ಮಾಡುತ್ತಾನೆಂದು ಶಂಕಿಸಬಾರದು. ಸರ್ವಸಂಹಾರಕನು ವಿಷ್ಣುವೊಬ್ಬನೇ ಆಗಿದ್ದಾನೆ.

अत्रापि विष्णुरिति वर्तमाने स इत्युक्तिः प्रागुक्तेनैक्यद्योतनाय वा, 'स तया वाचा तेन आत्मना' इत्यादौ प्रथमान्ततच्छब्दोक्तः प्रकृतमृत्युरेवात्ता निर्णयश्रुतौ उच्यत इति द्योतनाय वेति ।।

ಇಲ್ಲಿಯೂ ಸಹ 'ವಿಷ್ಣುಃ' ಎಂಬ ಪದವು ಅನುವೃತ್ತಿಯಿಂದಲೇ ದೊರೆಯಬೇಕಾದರೆ 'ಸಃ' ಎಂದು ಹೇಳಿದ್ದರ ಪ್ರಯೋಜನವೇನು? ಎಂದರೆ ಹಿಂದೆ 'ಸರ್ವಕರ್ತಾ' ಎಂಬಲ್ಲಿ ಹೇಳಲ್ಪಟ್ಟ ಸರ್ವಕರ್ತನು 'ಸರ್ವಂ ವಾ ಅತ್ತಿ' ಎಂಬಲ್ಲಿ ಹೇಳಲ್ಪಟ್ಟ ಸಂಹಾರಕರ್ತನು ಒಬ್ಬನೇ ಆಗಿದ್ದಾನೆಂದು ತೋರಿಸಬೇಕಾಗಿದೆ. 'ಸ ತಯಾ ವಾಚಾ' ಇತ್ಯಾದಿ ವಾಕ್ಯಗಳಲ್ಲಿ 'ತತ್' ಶಬ್ದದಿಂದ ಪ್ರತಿಪಾದ್ಯನಾದವನು 'ಸರ್ವಮತ್ತಿ' ಎಂಬ ಶ್ರುತಿಯಿಂದ ಪ್ರತಿಪಾದ್ಯನಾದವನು ಒಬ್ಬನೇ ಆಗಿದ್ದಾನೆಂದು ತಿಳಿಸಲು 'ಸಃ' ಎಂದು ಹೇಳಲಾಗಿದೆ.

ಶ್ರೀರಾಘವೇಂದ್ರತೀರ್ಥಶ್ರೀಪಾದಂಗಳವರಿಂದ ವಿರಚಿತವಾದ
ತತ್ವಮಂಜರಿಯ ಕನ್ನಡಾನುವಾದದಲ್ಲಿ ಅತ್ತೃತ್ವಾಧಿಕರಣವು ಮುಗಿಯಿತು.

* * * * *

# तन्त्रदीपिका

## अत्तृत्वाधिकरणम् - २

**ॐ अत्ता चराचरग्रहणात् ॐ ।। १-२-९ ।।**

अत्र नये संहाररूपक्रियात्मकलिङ्गसमन्वय उच्यते । 'सर्वं वा अत्ति' इत्युक्तात्ता तत्तु ब्रह्मैव, न त्वदितिः । सर्वमिति चराचरस्याद्यतया ग्रहणादित्यर्थः ।

तदित्यनुवृत्तेरत्त्रिति वाच्ये पुंनिर्देशः 'स तया वाचा तेनाऽत्मना' इत्यादौ स इति पुल्लिङ्गतच्छब्देन प्रकृतमृत्युरेव निर्णयश्रुतावुच्यत इति तदनुरोधेन । श्रुत्यनुगमात् सर्वेति वाच्ये चराचरेति तद्व्याख्यानेनोक्तिः सङ्कोचशङ्कानिरासाय ।।

ಈ ಅಧಿಕರಣದಲ್ಲಿ ಸಂಹಾರರೂಪವಾದ ಕ್ರಿಯಾತ್ಮಕಲಿಂಗದ ಸಮನ್ವಯವನ್ನು ಮಾಡುತ್ತಿದ್ದಾರೆ. ಬೃಹದಾರಣ್ಯಕದಲ್ಲಿ ಬರುವ 'ಸರ್ವಂ ವಾ ಅತ್ತಿ' ಎಂಬ ವಾಕ್ಯದಲ್ಲಿ ಪ್ರತಿಪಾದ್ಯನಾದ ಸಂಹಾರಕನು ತತ್ತು = ಬ್ರಹ್ಮನೇ ಆಗಿದ್ದಾನೆ. ಹೊರತು ಅದಿತಿಯಲ್ಲ. ಏಕೆಂದರೆ ಚರಾಚರ ಜಗತ್ತನ್ನು ಸಂಹಾರ್ಯವೆಂದು 'ಸರ್ವಂ' ಎಂಬ ಪದದಿಂದ ಗ್ರಹಣ ಮಾಡಿರುವುದರಿಂದ ಎಂದರ್ಥ.

ಸೂತ್ರದಲ್ಲಿ 'ತತ್' ಎಂಬ ಪದವನ್ನು ಅನುವೃತ್ತಿ ಮಾಡಿದ್ದರಿಂದ 'ಅತ್ತೃ' ಎಂದು ಹೇಳಬೇಕಾಗಿತ್ತು. 'ಸ ತಯಾ ವಾಚಾ ತೇನಾऽತ್ಮನಾ' ಎಂಬಲ್ಲಿ ಪುಲ್ಲಿಂಗವಾದ 'ಸಃ' ಎಂಬ ಪದವನ್ನು ಪ್ರಯೋಗಿಸಲಾಗಿದೆ. ಪುಲ್ಲಿಂಗದಲ್ಲಿರುವ ಈ 'ತತ್' ಶಬ್ದದಿಂದ ಪ್ರಕೃತವಾದ 'ಮೃತ್ಯುವೇ ಸರ್ವಂ ವಾ ಅತ್ತಿ' ಎಂಬ ಶ್ರುತಿಯಲ್ಲಿಯೂ ಪ್ರತಿಪಾದ್ಯವಾಗಿದೆ. ಅದನ್ನು ಅನುಸರಿಸಿ ಸೂತ್ರದಲ್ಲಿ 'ಅತ್ತಾ' ಎಂಬ ಪುಲ್ಲಿಂಗ ಪ್ರಯೋಗವು ಯುಕ್ತವಾಗಿದೆ. ಶ್ರುತಿಯ ಅನುಗುಣ್ಯಕ್ಕೋಸ್ಕರ ಸೂತ್ರದಲ್ಲಿ ಸರ್ವಪದವನ್ನೇ ಪ್ರಯೋಗಿಸಬೇಕಾಗಿತ್ತು. ಆದರೂ ಸಹ ಸರ್ವ ಪದವನ್ನು 'ಚರಾಚರ' ಎಂಬುದಾಗಿ ವ್ಯಾಖ್ಯಾನಿಸಿದ್ದರಿಂದ ಸರ್ವಶಬ್ದಕ್ಕೆ ಸಂಕೋಚ ಮಾಡಬೇಕೆಂಬ ಶಂಕೆಯನ್ನು ನಿರಾಕರಿಸಿದಂತಾಯಿತು.

इतश्चैवमित्याह –

**ॐ प्रकरणाच्च ॐ ।। १-२-१० ।।**

'नैवेह किञ्चन' इत्यादिब्रह्मप्रकरणाच्चात्ता ब्रह्मैवेत्यर्थः ।।

ಪರಿಪೂರ್ಣಚಂದ್ರಿಕಾ

ಮತ್ತೊಂದು ಕಾರಣದಿಂದಲೂ ಸರ್ವಾತ್ತೃವು ವಿಷ್ಣುವೇ ಆಗಿದ್ದಾನೆಂದು ಸಮರ್ಥಿಸುವುದಕ್ಕಾಗಿ 'ಪ್ರಕರಣಾತ್' ಎಂಬ ಸೂತ್ರವನ್ನು ಹೇಳುತ್ತಿದ್ದಾರೆ.

'ನೈವೇಹ ಕಿಂಚನ' ಮೊದಲಾದ ಬ್ರಹ್ಮಪ್ರಕರಣವಿರುವುದರಿಂದಲೂ ವಿಷ್ಣುವೇ 'ಅತ್ತಾ' ಎನಿಸಿದ್ದಾನೆಂದರ್ಥ.

ಶ್ರೀರಾಘವೇಂದ್ರತೀರ್ಥಶ್ರೀಪಾದಂಗಳವರಿಂದ ರಚಿತವಾದ

ತಂತ್ರದೀಪಿಕಾದ ಕನ್ನಡಾನುವಾದದಲ್ಲಿ ಅತ್ತೃತ್ವಾಧಿಕರಣವು ಸಮಾಪ್ತವಾಯಿತು.

### श्री राघवेन्द्रतीर्थविरचिता

# श्रीन्यायमुक्तावळिः

### अत्तृत्वाधिकरणम् - २

**ॐ अत्ता चराचरग्रहणात् ॐ ।। १-२-९ ।।**

**ॐ प्रकरणाच्च ॐ ।। १-२-१० ।।**

अत्र पूर्ववैषम्येण पूर्वपक्षोत्थानात् प्रत्युदाहरणरूपा सङ्गतिः । वाजसनेये तृतीयेऽध्याये 'स यद्यदेवासृजत तत्तदत्तुमध्रियत सर्वं वा अत्तीति तददितेरदितित्वम्' इति (बृ-३-१-४) श्रुतम् । तत्र सर्वं वा अत्तीत्यनेन लब्धोऽत्ता किमदितिर्देवमाता अथ विष्णुरिति सन्देहः (पूर्वपक्षः)। अदितिरेवेति प्राप्तं तददितेरित्यादिश्रुतेः अदितित्वलिङ्गाच्च । आदित्यशब्दपर्यायसवितृश्रुतेरन्तर्नयविषयवाक्ये श्रुतायाः वैष्णवत्वसिद्ध्या आदित्यश्रुतेः पूर्वत्र विष्णुपरत्वेऽप्यत्र तदसिद्ध्या श्रुतेर्निरवकाशत्वात् । लिङ्गस्याप्यत्तृत्वरूपतया 'अनश्नन्' इति श्रुत्या अनत्तुर्विष्णोरयोगादिति द्वयोर्निरवकाशत्वाद्वा श्रुतेरन्तर्नयन्यायेन सावकाशत्वेऽपि निरवकाशलिङ्गानुगृहीतत्वाद्वेति ।

सिद्धान्तस्तु 'सर्वं वा अत्ति' इत्युक्तसर्वात्तृत्वरूपसंहर्तृत्वस्य 'यमप्येति भुवनं साम्पराये' 'स्रष्टा पाता तथैवात्ता' इत्यादिश्रुतिस्मृतिभिः विष्ण्वेकनिष्ठत्वात् तस्यैवा

## श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचित-

# ब्रह्मसूत्रभाष्यम्

**आदित्ये विष्णुरित्युक्तम् । 'य एष आदित्ये पुरुषः सोऽहमस्मि स एवाहमस्मि' (छां. ४-११.) इत्यादावग्नीनामेवाऽदित्यादिस्थत्वमुच्यते।**

ಅನುವಾದ - ಸೂರ್ಯಮಂಡಲದಲ್ಲಿರುವವನು ವಿಷ್ಣುವೇ ಆಗಿದ್ದಾನೆಂದು ಆನಂದಮಯಾಧಿಕರಣದಲ್ಲಿ ಸಮರ್ಥಿಸಲಾಗಿದೆ. ಆದರೆ ಛಾಂದೋಗ್ಯೋಪನಿಷತ್ತಿನಲ್ಲಿ 'ಸೂರ್ಯಮಂಡಲದಲ್ಲಿರುವ ಪುರುಷನು ನಾನು, ನಾನೇ ಅವನಾಗಿದ್ದೇನೆ' ಎಂದು ಕೇಳಿಸುತ್ತಿದೆ. ಗಾರ್ಹಪತ್ಯ ಮೊದಲಾದ ಅಗ್ನಿಗಳಿಗೆ ಸೂರ್ಯಮಂಡಲದಲ್ಲಿ ಸ್ಥಿತಿಯು ಹೇಳಲ್ಪಟ್ಟಿದೆ.

ಪ್ರತಿಪದಾರ್ಥ - ಈ ಅಧಿಕರಣದಲ್ಲಿ ಚಕ್ಷುರಂತಸ್ಥತ್ವಲಿಂಗವನ್ನು ಸಮನ್ವಯ ಮಾಡಲಾಗಿದೆ. ಶ್ರುತ್ಯಾದಿ ಸಂಗತಿ, ವಿಷಯ, ಸಂಶಯಗಳನ್ನು ನಿರೂಪಿಸುತ್ತಾ ಯುಕ್ತಿಬದ್ಧವಾದ ಪೂರ್ವಪಕ್ಷವನ್ನು ತೋರಿಸುತ್ತಿದ್ದಾರೆ -

ಆದಿತ್ಯೇ = ಆದಿತ್ಯನಲ್ಲಿ, ವಿಷ್ಣುಃ = ಆನಂದಮಯ ಸ್ವರೂಪಿಯಾದ ವಿಷ್ಣು ಇದ್ದಾನೆಂದು, ಉಕ್ತಂ = ಆನಂದಮಯಾಧಿಕರಣದಲ್ಲಿ ಹೇಳಲ್ಪಟ್ಟಿದೆ. ಆದಿತ್ಯೇ = ಸೂರ್ಯನಲ್ಲಿ, ಯಃ ಏಷಃ = ಯಾವಪ್ರಸಿದ್ಧನಾದ, ಪುರುಷಃ = ಪುರುಷನು ನೆಲೆಸಿದ್ಧಾನೋ, ಸಃ = ಅವನು, ಅಹಮಸ್ಮಿ =ನಾನಾಗಿದ್ದೇನೆ, ಅಹಮೇವ = ನಾನೇ, ಸಃ = ಅವನು, ಅಸ್ಮಿ = ಆಗಿದ್ದೇನೆ. ಇತ್ಯಾದೌ = ಇವೇ ಮೊದಲಾದ, ಛಾಂದೋಗ್ಯದ ಮಾತುಗಳಲ್ಲಿ, ಅಗ್ನೀನಾಮೇವ = ಗಾರ್ಹಪತ್ಯ ಮೊದಲಾದ ಅಗ್ನಿಗಳಿಗೆ, ಆದಿತ್ಯಾದಿಸ್ಥತ್ವಂ = ಸೂರ್ಯಮಂಡಲ ಮೊದಲಾದವುಗಳಲ್ಲಿ ಸ್ಥಿತಿಯನ್ನು, ಉಚ್ಯತೇ = ಹೇಳಲ್ಪಟ್ಟಿದೆ.(१)

---

(१) भाष्यदीपिका – अत्राधिकरणे चक्षुरन्तःस्थत्वलिङ्गं ब्रह्मणि समन्वीयते । श्रुत्यादिसङ्गतिं विषयवाक्यं विषयसंशयौ सयुक्तिकं पूर्वपक्षं च दर्शयति – आदित्य इति ।। 'यश्चासावादित्ये' इत्यानन्दमयाधिकरणोदाहृतायां तथा 'अन्तरादित्ये' इत्यन्तर्नयोदाहृतायां च श्रुतावानन्दमयोऽन्तस्स्थो विष्णुरादित्येऽस्तीत्युक्तमित्यर्थः । ततः किमित्यत आह – य इति ।। तदित्यादौ संयोज्यम् । 'सोऽहं स एवाहम्' इत्यभ्यासोपन्यासः पूर्वपक्षयुक्तिप्रदर्शनार्थः । प्रथमादिपदेन 'अथैनमन्वाहार्यपचनोऽनुशशास । य एष चन्द्रमसि पुरुषो दृश्यते । सोऽहमस्मि स एवाहमस्मि । अथैनमाहवनीयोऽनुशशास । य एष विद्युति पुरुषो

**भाष्यम् – अतोऽक्ष्यादित्ययोरैक्यात् 'य एषोऽन्तरक्षिणि पुरुषो दृश्यते' (छां. ४-१५.) इत्यत्राप्यग्निरेवोच्यते ।**

ಅನುವಾದ - ಹಿಂದೆ ಹೇಳಿದ ಕಾರಣದಿಂದ ಕಣ್ಣಿನಲ್ಲಿ ನಿಯಾಮಕನಾಗಿರುವವನು ಸೂರ್ಯಮಂಡಲದಲ್ಲಿರುವವದರಿಂದ ''ಯಏಷೋಽಂತರಕ್ಷಿಣಿ ಪುರುಷೋ ದೃಶತೇ'' ಎಂಬ ವಾಕ್ಯದಲ್ಲಿಯೂ ಅಗ್ನಿಯೇ ಪ್ರತಿಪಾದ್ಯನಾಗುತ್ತಾನೆ.

ಪ್ರತಿಪದಾರ್ಥ - ಹಿಂದೆ ಹೇಳಿದ್ದರಿಂದ ಏನು ಸಮರ್ಥಿಸಿದಂತಾಯಿತು ಎಂಬ ಪ್ರಶ್ನೆಗೆ ಉತ್ತರಿಸುತ್ತಿದ್ದಾರೆ -

ಅತಃ = ಆ ಕಾರಣದಿಂದ, ಅಕ್ಷ್ಯಾದಿತ್ಯಯೋಃ = ಚಕ್ಷುರ್ಗೋಲಕ ಸೂರ್ಯಮಂಡಲದಲ್ಲಿರುವವರಿಗೆ, ಐಕ್ಯಾತ್ = ಐಕ್ಯವಿರುವುದರಿಂದ, ಅಕ್ಷಿಣಿ = ಚಕ್ಷುರ್ಗೋಲಕದಲ್ಲಿ, ಯಃ = ಯಾವಾತನು, ದೃಷ್ಯತೇ = ಕಾಣಿಸುತ್ತಾನೊ, ಇತ್ಯತ್ರಾಪಿ = ಎಂಬಲ್ಲಿಯೂ, ಏಷಃ = ಹಿಂದೆ ಹೇಳಲ್ಪಟ್ಟ, ಅಗ್ನಿರೇವ = ಅಗ್ನಿಯೇ, ಉಚ್ಯತೇ = ಪ್ರತಿಪಾದ್ಯನಾಗುತ್ತಾನೆ.(१)

---

दृश्यते सोऽहमस्मि स एवाहमस्मि' इति च वाक्यद्वयं गृह्यते । द्वितीयादिपदेन चन्द्रविद्युत्स्थत्वम् । यद्यपि आदित्यस्थत्वस्येव चन्द्रविद्युत्स्थत्वयोरग्नेरक्षिस्थत्वसाधकत्वाभावात् तदुपादानं न प्रकृतोपयुक्तम् । तथाऽग्नीनामिति बहुवचनं चानुपयुक्तम्, पूर्वपक्षे गार्हपत्यस्यैवाक्षिस्थत्वसाधनेन गार्हपत्यादीनां त्रयाणां तस्यासाधनात् । चन्द्रविद्युतोरक्ष्येकविधत्वाभावेन तत्स्थत्वस्याक्षिस्थत्वासाधकत्वाच्च । तथाऽपि आदिशब्दद्वयं बहुवचनं च पूर्वपक्षे गार्हपत्यादिबह्वग्निश्रुतिरूपयुक्तिसूचनार्थम् । यथा अन्वाहार्यपचनाख्यदक्षिणाग्न्याहवनीययोः चन्द्रविद्युत्स्थत्वमुच्यते, एवं गार्हपत्यस्यापि आदित्यस्थत्वमुच्यत इति दृष्टान्तार्थं गार्हपत्यादीनां त्रयाणां क्रमेणाऽदित्यादित्रितयस्थत्वेप्रसिद्धगार्हपत्यस्यैवाऽदित्यस्थत्वमुखेनाक्षिस्थत्वमागच्छतीति युक्तिप्रदर्शनार्थं वा तदुपादानमिति न वैयर्थ्यमिति ध्येयम्

(१) **भाष्यदीपिका** – ततोऽपि किमित्यत आह – अत इति ।। अस्य, न सन्निहितेन 'ऐक्यात्' इत्यनेनान्वयः । प्रकृतस्य अत इत्यनेन परामृष्टस्याऽदित्यान्तःस्थत्वस्य ऐक्ये हेतुत्वायोगात् । किन्तु व्यवहितेन 'अत्राप्यग्निरेवोच्यते' इत्यनेनान्वयः । न केवलमादित्यवाक्य इत्यपेरर्थः ।।

तथा च – यदानन्दमयाख्यविष्णुनिष्ठतयोक्त-मादित्यस्थत्वं तच्छान्दोग्ये 'य एष आदित्ये पुरुषः सोऽहमस्मि' इत्यादावग्नीनां गार्हपत्याख्याग्नेरेव 'उच्यते' प्रतीयते न विष्णोः । कुतः ? यतोऽत्र 'अग्नीनां' गार्हपत्यदक्षिणाग्न्याहवनीयानां त्रयाणां

क्रमेणाऽदित्यादिस्थत्वमुच्यते, अतः । ततः किम् ? यतोऽत्र गार्हपत्याख्याग्नेरेवाऽदित्यस्थत्वमुच्यतेऽतो 'य एषोऽन्तरक्षिणि पुरुषो दृश्यते' इति वाक्येऽप्यक्षिस्थत्वेन गार्हपत्याग्निरेवोच्यते, न स विष्णुः । श्रुतिगताहंशब्देनापि स एवोच्यते इति योजना । तथा च पूर्वपक्षश्रुतिगता-हंशब्दोऽग्नावेव मुख्य इति तस्यैव ग्रहणमिति भावः । नन्वग्नेरादित्यस्थत्वेऽपि कुतोऽक्षिस्थत्वप्राप्तिरित्यत आह – अक्ष्यादित्ययोरिति ॥ 'आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्' इत्यैतरेयश्रुते-रचेतनाक्ष्यादित्यमण्डलयोरादित्यचक्षुः-पदोदितैकचेतनाधिष्ठितत्वरूपैकधर्मेणैक-विधत्वादित्यर्थः ॥

यद्वा – 'अशनयोदाहृतादित्यत्रिवृदिव वै चक्षुः शुक्लं कृष्णं कनीनिका' इति श्रुत्यनुसारेण तयोस्त्रिवृत्त्वधर्मेणैकविधत्वादित्यर्थः । तथा च – आदित्यस्थत्वोक्तावर्थादक्षिस्थत्वमपि प्राप्तमेवेति भावः । यद्यपि 'स यश्चायम्' इति पूर्वोदाहृततैत्तिरीयश्रुतिस्थादित्यशब्दः उत्कृष्ट चेतनमात्रोपलक्षकतया व्याख्यातः। तथाऽप्यत्राधिकरणे सूर्याभिमन्यमानादित्यमण्डल-परत्वमप्यस्याङ्गीकृत्य आक्षेप-परिहारौ कृतौ । अत एव टीकायामक्ष्यादित्ययो-रेकविधत्वाद्युक्तम् । तत्त्वप्रदीपे तु – अक्षीन्द्रियप्रेरकादित्ययोरेकत्वादिति यथाश्रुतमेव व्याख्यातम् ॥

चन्द्रिकायामपि तत्त्वप्रदीपानुसारेण देवतापरमेवाक्षिपदम् । अत एव भाष्ये सन्न्यायरत्नावल्यां चाक्ष्यादित्ययोरैक्यादित्येवोक्तम्, न त्वेकविधत्वादिति । अक्ष्यादित्ययोरेकविधत्वादिति टीकाऽपि भाष्यानुसारेण प्रकारभेदनिषेधमुखेन प्रकार्यैक्यपरा नेयेति पक्षान्तरमप्युक्तम् । तथा च – देवतापरत्वे 'आदित्ये विष्णुरित्युक्तम्' इति भाष्यश्रुतिस्थाक्ष्यादित्यपदयोश्च यथाश्रुत एवार्थः । मण्डलपरत्वे तद्भाष्यस्थादित्यपदं पूर्वोदाहृततैत्तिरीयश्रुतिस्थादित्यपदं च मण्डलपरतया व्याख्येयमिति विवेकः ॥

अनेन छन्दोगश्रुत्युक्ताक्षिस्थत्वस्यान्यनिष्ठत्वाक्षेपमुखेनाऽनन्दमयनयोदाहृतायां तैत्तिरीय-श्रुतावर्थादुक्तस्यापि तस्यान्यनिष्ठत्वाक्षेपादानन्दमयाधिकरणेनास्याऽक्षे-पिकी सङ्गतिरुक्ता भवति ॥

अक्षिस्थत्वं विषयः । किमग्नेर्विष्णोर्वेति सन्देहः । अग्नीनामेवाक्षिस्थत्वमिति पूर्वः पक्षः । अत्राऽदित्यस्थत्वरूपयुक्तिश्चोक्ता भवति । अत्र, 'य एष आदित्ये पुरुषः' 'य एषोऽन्तरक्षिणि पुरुषः' इत्यनयोर्वाक्ययोः 'आदित्यश्चक्षुर्भूत्वा' इति वाक्यद्वारा एकार्थत्वमुपपाद्य तन्मुखेन 'य एष आदित्ये' इति वाक्येन 'यश्चासावादित्ये' इति वाक्यस्य सङ्गतिं सम्पाद्य तद्वाराऽर्थाक्षिप्ततदर्थार्थकस्य 'य एषोऽन्तरक्षिणि' इति वाक्यस्यापि तेन सङ्गतिरित्येवं वक्रसङ्गत्यैतदधिकरणारम्भ आदित्यस्थत्वलिङ्गस्यापि समन्वयसिद्ध्यर्थम् । अन्यथा 'नेतरोऽनुपपत्तेः' इत्यादौ विष्णुज्ञानान्मोक्ष इत्युक्तम्, स मोक्षः 'तद्यथा' इति

**भाष्यम् – अतः -**

**'तद्यथा पुष्करपलाश्र आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते' (छां. ४-१४.)इत्यग्निज्ञानादेव सर्वपापाश्लेषान्मोक्षोपपत्तिरिति । अतोऽब्रवीत्**

**ಅನುವಾದ** - ಯಾವರೀತಿಯಾಗಿ ಪದ್ಮಪತ್ರಕ್ಕೆ ನೀರು ಹೇಗೆ ಅಂಟುವುದಿಲ್ಲವೊ ಅದರಂತೆ ಚಕ್ಷುರಂತಸ್ಥನನ್ನು ತಿಳಿದವನಿಗೆ ಪಾಪವು ಅಂಟುವುದಿಲ್ಲ. ಎಂಬ ಛಾಂದೋಗ್ಯದ ಮಾತಿನಂತೆ ಅಗ್ನಿಯ ಜ್ಞಾನದಿಂದಲೇ ಮೋಕ್ಷವು ದೊರೆಯುತ್ತದೆ. ಆದ್ದರಿಂದ ಆನಂದಮಯನೂ ಸಹ ಅಗ್ನಿಯೇ ಆಗುತ್ತಾನೆಂದು ಪೂರ್ವಪಕ್ಷ.

ಪ್ರತಿಪದಾರ್ಥ - ಅತಃ = ಹಿಂದಿ ಹೇಳಿದ ಕಾರಣದಿಂದ, ಯಥಾ = ಹೇಗೆ, ಪುಷ್ಕರಪಲಾಶೇ = ಪದ್ಮಪತ್ರದಲ್ಲಿ, ಆಪಃ = ನೀರು, ನ ಶ್ಲಿಷ್ಯಂತೇ = ಅಂಟುವುದಿಲ್ಲವೊ, ಏವಂ = ಅದೇರೀತಿ, ಏವಂವಿದಿ = ಕಣ್ಣಿನಲ್ಲಿರುವವನನ್ನು ತಿಳಿಯುವವನಿಗೆ, ಪಾಪಂ ಕರ್ಮ = ಪಾಪ ಕರ್ಮವು, ನಶ್ಲಿಷ್ಯತೇ = ಲೇಪವಾಗುವುದಿಲ್ಲ. ಇತಿ = ಹೀಗೆ, ಅಗ್ನಿ = ಅಗ್ನಿಯ ಜ್ಞಾನದಿಂದಲೇ, ಸರ್ವಪಾಪಾಶ್ಲೇಷಾತ್ = ಎಲ್ಲ ಪಾಪಗಳ ಅಲೇಪದ ಮೂಲಕ, ಮೋಕ್ಷಃ = ಮೋಕ್ಷದ, ಉಪಪತ್ತಿಃ = ಪ್ರಾಪ್ತಿಯು, ಇತಿ = ಆಗುತ್ತದೆಂದು, ಅತಃ = ಆಕ್ಷೇಪಿಸಿದರೆ, ಅಬ್ರವೀತ್ = ಸೂತ್ರಕಾರರೇ ಉತ್ತರಿಸುತ್ತಿದ್ದಾರೆ.(१)

---

वाक्येन 'य एषोऽन्तरक्षिणि' इत्युक्ताक्षिस्थज्ञानात् प्रतीयत इति वक्ष्यमाणऋजुसङ्गत्यैवाधिकरणमारम्भणीयं स्यादिति ध्येयम् ।।

(१) **भाष्यदीपिका** – न केवलमक्षिस्थत्वसिद्धावग्नेरानन्दमयत्वप्राप्तिः । किन्तु यत्पूर्वं 'नेतरः' इत्यादौ विष्णुज्ञानान्मोक्ष इत्युक्तं, तदपि बाधितं स्यादित्यत आह – अत इति ।। 'अग्निज्ञानादित्येतत्' 'सर्वपापाश्लेषात्' इत्यनेनेव 'मोक्षः' इत्यनेनापि सम्बध्यते । तथा च यतोऽग्निरक्षिस्थोऽतस्तज्ज्ञानादेव मोक्षोऽपि भवेत् न विष्णुज्ञानात् । कुत एतत् ? अक्षिस्थाग्निज्ञानात् सर्वपापाश्लेषात् । न च तस्यासिद्धिः । 'तद्यथा' इति तदर्थवादेऽग्निज्ञानादेव सर्वपापाश्लेषोक्तेः । न च तज्ज्ञानात् सर्वपापाश्लेषमात्रेण कथं मोक्ष इति वाच्यम् । यतस्तज्ज्ञानान्मोक्षं विना सर्वपापाश्लेषासम्भवेन तदन्यथानुपपत्त्यैव मोक्षस्याप्युपपत्तिरिति योजना । एवं च पूर्वपक्षे अग्नेरक्षिस्थत्वेन 'तद्यथा' इत्यक्षिस्थस्योक्तं मुक्तिहेतुज्ञानविषयत्वमपि तस्यैव प्राप्नोतीति 'नेतरः' इत्युक्तमयुक्तमिति भावः । अनेन ऋजुसङ्गतिरप्यस्य दर्शिता भवति ।।

छान्दोग्ये हीत्थमाख्यायिका – (छां.४-१-५) कमलायनस्यापत्यं कामलायनः नामतः उपकोसलः सत्यकामाख्ये गुरौ ब्रह्मचर्यमुद्दिश्योवास । स आचार्यस्याग्नीन् गार्हपत्यादीन्

द्वादशवर्षपर्यन्तं पर्यचारीत् । सत्यकामस्त्वन्तेवासिनः स्वाध्यायं ग्राहयन् एनमेकमेव नाध्यापयत् । पुनः स्वजाययोक्तोऽपि अनुक्त्वैव विद्यां प्रवासाय प्रातिष्ठत । तदोपकोसलो व्याधिपीडितो विद्याप्राप्तिचिन्तयास्वाचार्यभार्ययाऽशानेत्युक्तोऽपि नाश्नात् । एवं ब्रह्मचारिण्यनश्नति तूष्णीम्भूते सति तदा गार्हपत्याद्यग्नयः कारुण्याविष्टाः त्रयोऽपि वयमस्मै ब्रह्मचारिणे विद्यां, प्रब्रुवामेति प्रतिज्ञाय मिलिताः सन्तो विद्यामूचुः । 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' इत्यादि ॥

एवं सम्भूयोपदेशानन्तरमेनं प्रत्येकम् अग्नय उपदिदिशुरित्युच्यते वेदपुरुषेण 'अथ हैनं गार्हपत्योऽनुशशास ...... य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मि' इत्यादिना । एवं त्रिभिरग्निभिः प्रत्येकमुपदिष्ट उपकोसलः अथास्माभिरुक्तं ज्ञेयमेव, नोपास्यम्, तत्तु त्वदाचार्य आगत्य वक्ष्यतीति तैरुक्तोऽभूत् । एवं स्थितेऽथाऽचार्यः सत्यकाम आजगाम । आगत्य चोपकोसलोक्तं श्रुत्वा प्रत्युवाच । किमिति ? यदग्निभिस्तुभ्यमुपदिष्टं तत् त्वया ज्ञेयमेव न तूपास्यं, तत्त्वमहमुपदेक्ष्ये इत्येवं प्रतिज्ञायाऽदरजननाय वक्ष्यमाणमस्तौत् 'यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते' इति ॥

एवं स्तुत्वोपकोसलाय विद्यामुपादिशत् सत्यकामः । किमिति ? 'य एषोऽन्तरक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच । एतदमृतमेतदभयमेतद् ब्रह्मेति' । अथ सम्भूयोपदेशानन्तरं एनमुपकोसलं गार्हपत्योऽनुशशास । किमिति ? पृथिव्यग्न्यन्नाख्यं ब्रह्मेति ॥

एवं व्याप्तविद्यामुक्त्वाऽन्तर्यामिविद्यामाह – **य इति** ॥ अस्य सोऽहमस्मीत्यस्य द्विकर्तृकत्वाद् गार्हपत्याद्यन्तर्यामी भगवान् स्वस्याऽदित्याद्यन्तर्यामिणा गार्हपत्यादिः स्वान्तर्यामिणः आदित्याद्यन्तर्यामिणा ऐक्यमाहेत्युच्यते । तथा च – अहेयत्वात् प्रत्यक्त्वाच्चाहं मदन्तर्यामी । आदित्ये च एष पुरुषः पूर्ण-षड्गुणो भगवान् दृश्यते दिव्यदृष्ट्या सोऽस्मीत्यर्थः । आदित्यस्थस्य विष्णोर्मदन्त-र्यामिणश्च विदुरधर्मादिवदभेदमात्रं न ; किन्तु विशेषाभावश्चेत्याह – **स एवेति** ॥

एवमुपासकस्य फलमाह – 'स एतदेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति सर्वमायुरेति ज्योग् जीवतीति' । 'पापकृत्यां' पापकार्यं 'लोकी' भगवल्लोकी भवति । 'सर्वं' सम्पूर्णं चाऽयुः प्राप्नोति । 'ज्योक्' सर्वज्ञः सन् जीवतीति । एवं 'य एष चन्द्रमसि' 'य एष विद्युति' इत्यनयोः अर्थोऽवगन्तव्यः ॥

'तत्' तत्रार्थे वक्ष्यमाणदृष्टान्तो यथा 'पुष्करपलाशे' पद्मपत्रे आपो यथा 'न श्लिष्यन्ते' न सज्जन्ते 'तथैवंविदि' वक्ष्यमाणाक्षिस्थत्वेन ब्रह्मापरोक्षज्ञानिनि ज्ञानोत्तरं पापं कर्म न श्लिष्यत इत्यर्थः । य एषोऽक्षिण्यन्तःपुरुषो दृश्यते दिव्यदृष्ट्या एष आत्मा वामनाख्य इति

**सू ॐ ।। अन्तर उपपत्तेः ।। ॐ ।। १३।।**

**चक्षुरन्तस्स्थो विष्णुरेव ।'त्रिपादस्यामृतं दिवि' (ऋ. १०-९०-३.) इत्यादिना तस्यैवामृतत्वाद्युपपत्तेः ।**

ಅನುವಾದ - ಚಕ್ಷುರಂತರ್ಗತನಾದವನು ವಿಷ್ಣುವೇ ಆಗಿದ್ದಾನೆ. ಏಕೆಂದರೆ ''ತ್ರಿಪಾದಸ್ಯ ಅಮೃತಂ ದಿವಿ'' ಎಂಬಲ್ಲಿ ಅಮೃತತತ್ವವನ್ನು ವಿಷ್ಣುವಿನ ಧರ್ಮವೆಂದು ಹೇಳಲಾಗಿದೆ.

ಪ್ರತಿಪದಾರ್ಥ - ಚಕ್ಷುರಂತಸ್ಥಃ = ಚಕ್ಷುರಿಂದ್ರಿಯದಲ್ಲಿ ನಿಯಾಮಕನಾಗಿರುವವನು, ವಿಷ್ಣುರೇವ = ವಿಷ್ಣುವೇ ಆಗಿದ್ದಾನೆ

ಏಕೆಂದರೆ ಅಸ್ಯ = ಇವನ, ಅಮೃತಂ = ನಾಶ ರಹಿತವಾದ, ತ್ರಿಪಾದಃ = ಮೂರು ಪಾದಗಳು, ದಿವಿ = ದೇವಲೋಕದಲ್ಲಿವೆ. ಇತ್ಯಾದಿನ = ಇವೇ ಮೊದಲಾದ ಪ್ರಮಾಣಗಳಿಂದ ತಸ್ಯೈವ = ವಿಷ್ಣುವಿನಲ್ಲಿಯೇ, ಅಮೃತತ್ವಾದಿ = ಅಮೃತತ್ವ ಮೊದಲಾದ ಧರ್ಮಗಳು, ಉಪಪತ್ತೇಃ = ಯುಕ್ತವಾಗುತ್ತವೆ.(१)

---

होवाच उपकोसलं प्रति सत्यकामः । 'एतदमृतं' स्वतो मृतिशून्यं नित्यमुक्तं, 'एतदभयं' स्वतो भयशून्यं 'एतद् ब्रह्म' गुणपूर्णमिति सिद्धान्तरीत्या श्रुत्यर्थः । पूर्वपक्षी त्वेतत्प्रकरणमग्निपरं मन्यते ।।

(१) **भाष्यदीपिका** – सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे – **अत इति** ।। इति सङ्गतिसम्भवात् शङ्कासद्भावाच्च । अतः तत्परिहाराय उत्तरमब्रवीत् सूत्रकार इत्यर्थः । चक्षुरन्तःस्थ इत्यनेन अन्तर इत्यंशो विष्णुरेवेत्यनेन अनुवृत्तस्तत्त्वित्यंशश्च व्याख्यातः । यद्यपि अनुव्याख्याने शब्दवैयर्थ्यपरिहाराय 'अन्तस्स्थित्वा रमणकृत्' इति व्याख्यानाद् अत्रापि तदनुसारेण रमणकृच्चेति वक्तव्यम् । तथाऽप्यत्र रमणक्रियाबोधकात्मशब्दस्य हेतूकरणान्न तदर्थस्य प्रतिज्ञायामन्वयः सम्भवतीति अन्तःस्थ इत्येवोक्तम् । तत्र त्वात्मशब्दार्थस्य हेतुत्वाविवक्षाणात् साध्यान्वयो न युज्यत इति रमणकृदित्यप्युक्तम् ।।

वस्तुतस्तु – सूत्रे अन्तरित्यनुक्त्वा अन्तर इत्यधिकोक्तेः सार्थक्यायात्रापि रमणकृच्चेत्यपि उपलक्षणया वाच्यम् । अवयवार्थविवक्षाऽविवक्षाभ्याम् आत्मशब्दस्य साध्यसमर्पकताहेतुत्वं च युज्यते इति ध्येयम् ।।

उपपत्तेरित्येतदनेकलिङ्गपरतया लिङ्गानां निरवकाशत्वोक्तिपरतया च व्याचष्टे – **त्रिपादिति**।। इत्यादिना वाक्येन उक्तस्येति शेषः । तस्येति विपरिणतं पदमावर्तते । अमृतत्वादित्येतदिहापि षष्ठ्यन्ततया बुद्ध्या विविक्तं सम्बध्यते । प्रथमेनाऽदिपदेन 'अभयं तितीर्षतां पारम्' (कठ.उ.३-२) 'अमृतैवैषा देवता' 'आत्माऽजरोऽमृतो ऽभयो ब्रह्म' (बृ.६-४-२५)

भाष्यम् –

ब्रह्मशब्दाद्युपपत्तेश्च ।'सोऽहमस्मि' इत्यादि त्वन्तर्याम्यपेक्षया ।
'अन्तर्यामिणमीशेशमपेक्ष्याहं त्वमित्यपि ।
सर्वे शब्दाः प्रयुज्यन्ते सति भेदेऽपि वस्तुषु ॥' इति महाकौर्मे ॥

ಅನುವಾದ - ಮತ್ತು "ಏತತ್ ಬ್ರಹ್ಮ" ಎಂಬಲ್ಲಿ ಹೇಳಲ್ಪಟ್ಟ ಬ್ರಹ್ಮಶಬ್ದವೂ ಸಹ ವಿಷ್ಣುವಿನಲ್ಲಿಯೇ ಉಪಪನ್ನವಾಗುತ್ತದೆ. ಅಗ್ನಿಯಲ್ಲಿ ಹೇಳಲ್ಪಟ್ಟ "ಸೋऽಹಮಸ್ಮಿ" ವಾಕ್ಯಗಳು ಅಂತರ್ಯಾಮಿ ವಿವಕ್ಷೆಯಿಂದ ಪರಮಾತನಲ್ಲಿಯೇ ಉಪಪನ್ನವಾಗುತ್ತವೆ -

"ಬ್ರಹ್ಮಾದಿ ದೇವತೆಗಳಿಗೆ ಒಡೆಯನಾದ ಮಹಾವಿಷ್ಣುವುಸರ್ವಾಂತರ್ಯಾಮಿಯಾಗಿದ್ದಾನೆ. ಆದ್ದರಿಂದ ಅಹಂ, ತ್ವಂ, ಮೊದಲಾದ ಶಬ್ದಗಳನ್ನು ಮತ್ತು ಸಕಲ ಶಬ್ದಗಳನ್ನು ಸಕಲ ಪದಾರ್ಥಗಳಿಂದ ಭೇದವಿದ್ದರೂ ಅವನಲ್ಲಿ ಪ್ರಯೋಗಿಸಲಾಗುತ್ತದೆ" ಹೀಗೆ ಮಹಾಕೌರ್ಮಪುರಾಣವು ಹೇಳಿದೆ.

ಪ್ರತಿಪದಾರ್ಥ - ಬ್ರಹ್ಮಶಬ್ದಾದಿ = ಏತತ್ ಬ್ರಹ್ಮ ಎಂಬಲ್ಲಿ ಹೇಳಲ್ಪಟ್ಟ ಬ್ರಹ್ಮ ಶಬ್ದವೇ ಮೊದಲಾದವು, ಉಪಪತ್ತೇಶ್ಚ = ವಿಷ್ಣುವಿನಲ್ಲಿಯೇ ಉಪಪನ್ನವಾಗುತ್ತವೆ

ಸೋಹಮಸ್ಮಿ = ಅವನೇ ನಾನಾಗಿದ್ದೇನೆ, ಇತ್ಯಾದಿತು = ಇವೇ ಮೊದಲಾದ ವಾಕ್ಯಗಳಾದರು, ಅಂತರ್ಯಾಮಿ = ಅಂತರ್ಯಾಮಿಯ, ಅಪೇಕ್ಷಯಾ = ದೃಷ್ಟಿಯಿಂದ ಉಪಪನ್ನವಾಗುತ್ತವೆ. ಏಕೆಂದರೆ, ಅಂತರ್ಯಾಮಿಣಂ = ಅಂತರ್ಯಾಮಿಯಾದ, ಈಶೇಶಂ = ಸಕಲ ದೇವತೆಗಳಿಗೆ ಒಡೆಯನಾದ ವಿಷ್ಣುವನ್ನು, ಅಪೇಕ್ಷ್ಯಾ = ವಿವಕ್ಷಿಸಿ, ಅಹಂ = ನಾನು ಎಂಬ ಶಬ್ದವು, ತ್ವಂ = ನೀನು ಎಂಬ ಶಬ್ದವು, ಮತ್ತು ಇತ್ಯಪಿ = ಈ ರೀತಿಯಾಗಿ, ಸರ್ವೇ ಶಬ್ದಾಃ = ಎಲ್ಲಾ ಶಬ್ದಗಳೂ ಸಹ, ಪ್ರಯುಜ್ಯಂತೇ = ಪ್ರಯೋಗಿಸಲ್ಪಡುತ್ತವೆ. ಸತಿ ಭೇದೇ = ಭೇದವು ಇದ್ದರೂ ಕೂಡ, ಅಂತರ್ಯಾಮಿಯ ವಿವಕ್ಷೆಯಿಂದ, ವಸ್ತುಷು = ಪದಾರ್ಥಗಳಲ್ಲಿ, ವಿಷ್ಣುವನ್ನೇ ಪ್ರತಿಪಾದಿಸುತ್ತವೆ. ಇತಿ = ಹೀಗೆ, ಮಹಾಕೌರ್ಮೇ = ಮಹಾಕೂರ್ಮಪುರಾಣವು

---

इत्यादिवाक्यं द्वितीयेनाभयत्वादिकं गृह्यते । तथा च – त्रिपादित्यादिना श्रुत्यन्तरवाक्येन तस्य विष्णोरेव उक्तस्य 'एतदमृतम्' इति वाक्येऽन्तःस्थ-निष्ठत्वेनोक्तस्यामृतत्वाद्युपपत्तेर्लिङ्गस्य तस्मिन् विष्णावेव उपपत्तेर्युक्तत्वादन्यत्रायुक्तत्वादिति योजना । अनेन लिङ्गस्य निरवकाशत्वानेकत्वाभ्यां प्राबाल्यमुक्तं भवति ॥

'अमृतं' मृतिहरितं 'यदभयं' भयरहितं यच्च 'तितीर्षतां' संसारतरणेच्छूनां 'पारं' संसारस्य पारस्थं तदुत्तरावधिभूते श्वेतद्वीपादौ स्थितं मुक्तप्राप्यं परं ब्रह्म तद् ध्यातुं साधनं वक्तुं वयं 'शकेमहि' शक्ताः स्म इति कठश्रुत्यर्थः ॥

ಹೀಲರ.(१)

## श्रीपद्मनाभतीर्थविरचितसत्तर्कदीपावळ्याम्

## अन्तरधिकरणम्

### ॐ अन्तर उपपत्तेः ॐ ।। १-२-१३ ।।

इदमाम्नायते । 'य एषोऽन्तरक्षिणि पुरुषो दृश्यत एष आत्मा' इति ।

(१) **भाष्यदीपिका** – यदैवं निरवकाशत्वानेकत्वाभ्यां बलवल्लिङ्गबलाच्चक्षुरन्तःस्थस्य विष्णुत्वनिश्चयः, किमु तदोभयथास्वभावनिरवकाशत्वाभ्याम् अनेकत्वाच्च बलवच्छ्रुतितोऽपीति भावेन सौत्रमुपपत्तेरित्यंशं ब्रह्मादिश्रुतिरूपहेत्वन्तरपरतया तस्य प्राबल्योपयोगिनिरवकाशत्वोपपादनपरतया च प्रकारान्तरेण व्याचष्टे – **ब्रह्मेति** ।।आदिपदेनाऽत्मशब्दो गृह्यते । ब्रह्मात्मादीति पाठे आदिशब्देन पुरुषशब्दो ग्राह्यः । अत्र श्रुतेत्यादौ संयोज्यम् । तस्यैवेत्यनुषज्यते । तथा च – अत्रान्तःस्थप्रकरणे श्रुतब्रह्मशब्दादेस्तस्य विष्णोरेवोपपत्तेरन्यस्यानुपपत्तेरित्यर्थः। गुणपूर्तिवाचिब्रह्मशब्दस्य विष्णावेव मुख्यत्वादात्मशब्दस्यापि आदेयमुपादेयं सुखं मात्यनुभवतीति व्युत्पत्त्या तत्रैव मुख्यत्वादिति भावः ।।

अनेन 'य एषोऽन्तरक्षिणि' इति श्रुत्युक्तोऽन्तरः तत्तु तत्तज्जीवप्रेरकत्वेन तत्तच्चक्षुरन्तस्स्थितो विष्णुरेव, न त्वग्निः । कुतः ? उपपत्तेः । अत्र 'एतदमृतमभयमेतद् ब्रह्मैष आत्मा' इत्यमृतत्वाभयत्वादिलिङ्गश्रवणाद् ब्रह्मादिशब्दश्रुतेश्च तेषां च विष्णावेवोपपत्तेः, अन्यत्रानुपपत्तेरिति सूत्रार्थ उक्तो भवति ।।

ननु निरवकाशश्रुतिलिङ्गबलाद् यदि विष्णुरेव अक्षिस्थस्तदाऽऽदित्यस्थोऽपि स एव स्यात् । तर्हि 'सोऽहमस्मि स एवाहमस्मि' इत्यहमादिश्रुतेः का गतिरित्यत आह – **सोऽहमस्मीत्यादीति** ।। आदिपदेन गार्हपत्यादिशब्दानां ग्रहणम् । तथा च इत्यादिवाक्यस्थमहमादिपदजातमित्यर्थः । अपेक्षयेत्यनन्तरं प्रवृत्तमिति शेषः ।।

अन्तर्यामिणि अहमादिशब्दप्रवृत्तिं स्मारयति – **अन्तर्यामिणमिति** ।। आद्योऽपिः समुच्चये । द्वितीयो यद्यपि तथाऽपीत्यर्थे । ईशानां ब्रह्मादीनाम् ईशमित्यन्तर्यामित्वोपपादकम् । तथा च – 'वस्तुषु' अग्न्यादिजीवेषु ईशाद् भेदे सत्यपि तदभेदबोधकोऽहमितिशब्दः त्वमितिशब्दः । किं बहुनाऽभेदसाधकाः सर्वे तत्तच्छब्दाः प्रयुज्यन्ते । कथम् ? यतोऽन्तर्यामिणमपेक्ष्यैवैते शब्दाः प्रयुज्यन्ते । नैतावताऽग्न्यादिजीवानां ईशाभेदः शङ्क्यः । यतः सोऽन्तर्यामी ईशेशो ब्रह्माद्युत्तम इत्यर्थः । महाकौर्मे इत्यस्य उक्तत्वादित्यध्याहारेण सोऽहमिति पूर्ववाक्येनान्वयः ।।

अत्रात्मेतिशब्दनिर्दिष्टोऽक्षिस्थपुरुषः कोऽयमिति विचार्यते । अत्राधस्तनवाक्यादादित्यस्थः पुरुषः तावदग्निरेवावगम्यते । 'अथ हैनं गार्हपत्योऽनुशशास' 'य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मि' इति 'स एवाहमस्मि' इति 'स यथा चन्द्रस्थपुरुषोऽह्नि विशेषावगतः' 'अथ हैनमन्वाहार्य-पचनोऽनुशशास य एष चन्द्रमसि पुरुषो दृश्यते सोऽहमस्मि' इति । आदित्यस्थपुरुषस्यवाक्षिस्थपुरुषत्वेनाक्ष्यादित्यैक्यस्यानेकश्रुतिसिद्धत्वादग्निरेवायम-क्षिस्थपुरुषः स्यात् । अतश्च 'यश्चासावादित्यः' इत्यादिना यदादित्याधिष्ठातृत्वमुक्तं विष्णोस्तदप्यग्नेरेव समायातम् । यद्विष्णुज्ञानमेव मोक्षसाधनं प्रतिपादितम् । 'तमेवं विद्वानमृत इह भवति । नान्यः पन्था' इत्यादिना तदपि न सिद्ध्यति अक्षिस्थपुरुषाग्निविदो मोक्षश्रवणात् । 'एवमेवंविदि पापं कर्म न श्लिष्यते' इत्येवं पूर्वपक्षयति – आदित्य इति ।। अत्र सूत्रमवतार्य व्याचष्टे – अन्तरित्यादिना ।। अक्षिस्थपुरुषोऽयं विष्णुरेव । 'एष आत्मेति होवाच' 'एतदमृतमेतदभयमेतद् ब्रह्म' इति श्रूयमाणत्वात् । अमृतत्वादिकं विष्णोरेव श्रूयते । 'त्रिपादस्यामृतं दिवि' इत्यादिश्रुत्यन्तरे । नच विष्णुवदग्नेरप्यमृतत्वं शङ्कनीयम् । 'तमेताः पञ्चदेवताः परिम्रियन्ते विद्युद् वृष्टिश्चन्द्रमा आदित्योऽग्निः' 'भयादग्निः तपति' इत्यादिश्रुतिविरोधात् । एतद्वाक्यमग्निप्रापकमुक्तं तदन्यथोपपन्नमित्याह – सोऽहमिति ।।

ಈ ಅಧಿಕರಣದ ವಿಷಯವಾಕ್ಯ ಹೀಗಿದೆ - "ಯ ಏಷೋಽಂತರಕ್ಷಿಣಿ ಪುರುಷೋ ದೃಶ್ಯತ ಏಷ ಆತ್ಮಾ" ಎಂದು ಈ ಶ್ರುತಿಯಲ್ಲಿ ಆತ್ಮ ಶಬ್ದದಿಂದ ನಿರ್ದೇಶಿಸಲ್ಪಟ್ಟ ಕಣ್ಣಿನಲ್ಲಿರುವ ಪುರುಷನು ಯಾರೆಂದು ವಿಚಾರ ಮಾಡಲಾಗಿದೆ. ಮುಂದೆ ಹೇಳುವ ಶ್ರುತಿಯಂತೆ ಆದಿತ್ಯನಲ್ಲಿರುವ ಪುರುಷನೇ ಕಣ್ಣಿನಲ್ಲಿರುವುದರಿಂದ ಅಗ್ನಿಯೇ ಅಕ್ಷಿಸ್ಥನೆನಿಸುತ್ತಾನೆ. "ಅಥ ಹೈನಂ ಗಾರ್ಹಪತ್ಯೋಽನುಶಶಾಸ" ಎಂಬುದಾಗಿ ಆದಿತ್ಯನಲ್ಲಿರುವ ಪುರುಷನಿಗೆ ಅಕ್ಷಿಯಲ್ಲಿರುವ ಪುರುಷನಿಂದ ಐಕ್ಯವು ತಿಳಿಯುತ್ತದೆ. ಹೀಗೆ ಅನೇಕ ಶ್ರುತಿಗಳಿಂದ ಅಗ್ನಿಯು ಅಕ್ಷಿಸ್ಥನಾಗಬೇಕು. ಆದ್ದರಿಂದ "ಯಶ್ಚಾಸಾವಾದಿತ್ಯೇ" ಇತ್ಯಾದಿಯಾಗಿ ಆದಿತ್ಯನಿಗೆ ವಿಷ್ಣು ಅಧಿಷ್ಠಾನನಾಗಿದ್ದಾನೆಂಬುದು ಅಗ್ನಿಯಲ್ಲಿಯೇ ಸಮನ್ವಯವಾಗುತ್ತದೆ. ಇನ್ನು ವಿಷ್ಣುಜ್ಞಾನದಿಂದ ಮೋಕ್ಷವಾಗುತ್ತದೆಂದು ಹೇಳಲಾಗಿತ್ತು. ಆದರೆ "ತಮೇವಂ ವಿದ್ವಾನಮೃತ ಇಹ ಭವತಿ । ನಾನ್ಯಃ ಪಂಥಾ" ಎಂಬ ಶ್ರುತಿಯಲ್ಲಿ ಅಕ್ಷಿಯಲ್ಲಿರುವ ಅಗ್ನಿಯ ಜ್ಞಾನದಿಂದಲೇ ಮೋಕ್ಷವಾಗುತ್ತದೆಂದು ಹೇಳಲಾಗಿದೆ. "ಏವಮೇವಂವಿದಿ ಪಾಪಂ ಕರ್ಮ ನ ಶ್ಲಿಷ್ಯತೇ" ಎಂಬ ಶ್ರುತಿಯಂತೆ ಇಂತಹ ಅಗ್ನಿಯ ಜ್ಞಾನದಿಂದ ಪುಣ್ಯ ಪಾಪಗಳ ಸಂಪರ್ಕಕ್ಕೂ ಒಳಗಾಗಲಾರನು.

ಅಂತರಾಧಿಕರಣ (೧-೨-೨)

ಈ ಪೂರ್ವಪಕ್ಷವನ್ನು 'ಆದಿತ್ಯೇ' ಎಂಬುದರಿಂದ ನಿರಾಕರಿಸುತ್ತಿದ್ದಾರೆ. ಈ ವಿಷಯದಲ್ಲಿ ಸೂತ್ರವನ್ನು ಉಪನ್ಯಾಸ ಮಾಡಿ ವ್ಯಾಖ್ಯಾನಿಸಿದ್ದಾರೆ 'ಅಂತಃ' ಎಂಬ ವಾಕ್ಯದಿಂದ. ಅಕ್ಷಿಸ್ಥಪುರುಷನು ವಿಷ್ಣುವೇ ಆಗಿದ್ದಾನೆ. ''ಏಷ ಆತ್ಮೇತಿ ಹೋವಾಚ'' ಎಂದು ತಿಳಿಸಿರುವುದರಿಂದ ಅಮೃತತ್ವಾದಿಗಳು ವಿಷ್ಣುವಿನ ಧರ್ಮವೇ ಆಗಿವೆಯೆಂದು ''ತ್ರಿಪಾದಸ್ಯಾಮೃತಂ ದಿವಿ'' ಎಂಬ ಮತ್ತೊಂದು ಶ್ರುತಿಯಿಂದ ಸ್ಪಷ್ಟವಾಗುತ್ತದೆ. ವಿಷ್ಣುವಿನಂತೆ ಅಗ್ನಿಯಲ್ಲಿಯೂ ಅಮೃತತ್ವವನ್ನು ಶಂಕಿಸಬಾರದು. ''ತಮೇತಾಃ ಪಂಚದೇವತಾಃ ಪರಿಮ್ರಿಯಂತೇ ವಿದ್ಯುದ್‌ವೃಷ್ಟಿಶ್ಚಂದ್ರಮಾ ಆದಿತ್ಯೋಽಗ್ನಿಃ'', 'ಭಯಾದಗ್ನಿಸ್ತಪತಿ' ಇತ್ಯಾದಿ ಶ್ರುತಿಯಂತೆ ವಿಷ್ಣುವಿಗೆ ಹೆದರಿ ಅಗ್ನಿಯು ಬೆಳಗುತ್ತಾನೆಂದು ತಿಳಿಯುತ್ತದೆ. ಇನ್ನು ಉಳಿದ ಶ್ರುತಿಗಳಲ್ಲಿ ಅಗ್ನಿಪ್ರಾಪಕವಾಗಿ ಹೇಳಿದ್ದು ವಿಷ್ಣುವಿನಲ್ಲಿ ಸಮುಚ್ಚಯಗೊಳಿಸಬೇಕೆಂದು 'ಸೋಽಹಂ' ಇತ್ಯಾದಿ ವಾಕ್ಯಗಳಿಂದ ಪ್ರತಿಪಾದಿಸುತ್ತಿದ್ದಾರೆ.

**तत्वप्रकाशिका – अत्राग्निश्रुतिसाहित्येनान्यत्रप्रसिद्धस्य चक्षुरन्तःस्थत्वलिङ्गस्य परब्रह्मणि समन्वयसमर्थनादस्ति शास्त्रादिसङ्गतिः । श्रुत्यादिसङ्गतिं विषयवाक्यं विषयसंशयौ सयुक्तिकं पूर्वपक्षं च दर्शयति – आदित्य इति ।। 'यश्चासावादित्ये:' इत्यानन्दमयस्याऽऽदित्यस्थत्वमुक्तम् । ततश्चार्थादक्षिस्थत्वमप्युक्तम् । तदक्षिस्थत्वं छन्दोगश्रुतौ कस्यचित् प्रतीयते । 'य एषोऽन्तरक्षणि पुरुषो दृश्यते एष आत्मेति होवाचेतदमृतमभयमेतद् ब्रह्म' इति । तच्च यद्यन्यस्य स्यात्तदाऽऽदित्यस्थत्वमानन्दमयत्वं चान्यस्यैव प्रसज्येतेत्यवश्यं निर्णेयमेव ।**

ಈ ಅಧಿಕರಣದಲ್ಲಿ ಅಗ್ನಿಶ್ರುತಿಯ ಜೊತೆಯಲ್ಲಿ ಅನ್ಯತ್ರಪ್ರಸಿದ್ಧವಾದ ಚಕ್ಷುರಿಂದ್ರಿಯಸ್ಥಿತತ್ವ ಲಿಂಗವನ್ನು ಪರಬ್ರಹ್ಮನಲ್ಲಿ ಸಮನ್ವಯ ಮಾಡುತ್ತಿರುವುದರಿಂದ ಶಾಸ್ತ್ರ, ಅಧ್ಯಾಯ, ಪಾದಸಂಗತಿಗಳು ಇವೆ.

ಭಾಷ್ಯದಲ್ಲಿ ''ಆದಿತ್ಯ'' ಇತ್ಯಾದಿ ವಾಕ್ಯಗಳಿಂದ ಶ್ರುತಿಸಂಗತಿ, ವಿಷಯವಾಕ್ಯ, ವಿಷಯ, ಸಂಶಯ ಮತ್ತು ಯುಕ್ತಿಸಹಿತವಾಗಿ ಪೂರ್ವಪಕ್ಷವನ್ನು ತೋರಿಸುತ್ತಿದ್ದಾರೆ.

ತೈತಿರೀಯೋಪನಿಷತ್ತಿನ ''ಯಶ್ಚಾಸಾವಾದಿತ್ಯೇ'' ಎಂಬಲ್ಲಿ ಆದಿತ್ಯನಲ್ಲಿ ಆನಂದಮಯನು ಅಂತಃಸ್ಥನಾಗಿದ್ದಾನೆಂದು ಕೇಳಿಸುತ್ತಿದೆ. ಆದ್ದರಿಂದ ಚಕ್ಷುರಿಂದ್ರಿಯದಲ್ಲಿ ಇರುವವನು ಆನಂದಮಯನೆಂದೇ ಅರ್ಥವಾಗುತ್ತದೆ. (ಏಕೆಂದರೆ ಕಣ್ಣು ಮತ್ತು ಸೂರ್ಯ ಇವುಗಳ ಅಂತರ್ಯಾಮಿ ದೇವತೆ ಒಬ್ಬನೇ ಆಗಿದ್ದಾನೆ) ಆದರೆ ಛಾಂದೋಗ್ಯೋಪನಿಷತ್ತಿನಲ್ಲಿ ಚಕ್ಷುರಿಂದ್ರಿಯದಲ್ಲಿರುವವನು ಯಾರೋ ಒಬ್ಬ ಪುರುಷನೆಂದು ಹೇಳಿದಂತೆ ತೋರುತ್ತಿದೆ. ಆ

ಮಂತ್ರವು - "ಯ ಏಷೋಽಂತರಕ್ಷಿಣಿ ಪುರುಷೋ ದೃಶ್ಯತೇ, ಏಷ ಆತ್ಮೇತಿ ಹೋವಾಚೈತದಮೃತಮಭಯ- ಮೇತದ್ ಬ್ರಹ್ಮ". ಆದ್ದರಿಂದ ಒಂದು ವೇಳೆ ಚಕ್ಷುಸ್ಸಿನಲ್ಲಿ ಅಂತಃಸ್ಥನಾದವನು ಬೇರೆಯವನಾದರೆ ಆದಿತ್ಯನಲ್ಲಿ ಅಂತಃಸ್ಥನಾದ ಆನಂದಮಯನೂ ಸಹ ಅವನೇ ಆಗಬೇಕಾಗುತ್ತದೆ. ಆದ್ದರಿಂದ ಚಕ್ಷುರಿಂದ್ರಿಯದಲ್ಲಿರುವವನನ್ನು ಯಾರೆಂದು ಅವಶ್ಯವಾಗಿ ನಿರ್ಣಯ ಮಾಡಬೇಕಾಗಿದೆ.

**तत्वप्रकाशिका – तदक्षिस्थत्वं विषयः । विष्णोरग्नेर्वेति सन्देहः । 'यश्चासावादित्ये' इत्युक्तिरग्निश्रुतिश्च सन्देहबीजम् । 'य एषोऽन्तरक्षिणि' इति वाक्येऽग्निरेवाक्षिस्थत्वेनोच्यत इति पूर्वः पक्षः । यतो 'य एष आदित्ये पुरुषः सोऽहमस्मि स एवाहमस्मि' इत्यग्नेरेवाऽऽदित्यस्थत्वमुच्यते । नच वाच्यमग्नेरादित्यस्थत्वेऽपि कुतोऽक्षिस्थत्वमिति । आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशदिति श्रुतेरक्ष्यादित्ययोरेकविधत्वादादित्यस्थितत्वेनाग्नेरक्षिस्थत्वसिद्धेः । एतस्मिन् प्रकरणे 'अथ हाग्नयः समूदिरे' 'गार्हपत्योऽनुशशास' इत्यादिबह्वग्निश्रुति सद्भावाच्च ।**

ಕಣ್ಣಿನಲ್ಲಿ ನಿಯಾಮಕನಾಗಿರುವವನು ಯಾರು? ಎಂಬುದೇ ಈ ಅಧಿಕರಣಕ್ಕೆ ವಿಷಯ. ವಿಷ್ಣುವೋ? ಅಥವಾ ಅಗ್ನಿಯೋ? ಎಂದು ಸಂಶಯ. "ಯಶ್ಚಾಸಾವಾದಿತ್ಯೇ" ಎಂಬ ತೈತ್ತಿರೀಯ ಶ್ರುತಿ ಮತ್ತು ಅಗ್ನಿಶ್ರುತಿಗಳು ಸಂಶಯಕ್ಕೆ ಕಾರಣ. "ಯ ಏಷೋಽಂತರಕ್ಷಿಣಿ" ಎಂಬ ವಾಕ್ಯದಲ್ಲಿ ಅಗ್ನಿಯೇ ಕಣ್ಣಿನಲ್ಲಿ ನಿಯಾಮಕನಾಗಿ ಇದ್ದಾನೆಂದು ಶ್ರುತಿಯು ಹೇಳುತ್ತಿದೆಂದು ಪೂರ್ವಪಕ್ಷ - ಛಾಂದೋಗ್ಯೋಪನಿಷತ್ತಿನಲ್ಲಿ "ಯ ಏಷ ಆದಿತ್ಯೇ ಪುರುಷ ಸೋಽಹಮಸ್ಮಿ ಸ ಏವಾಹಮಸ್ಮಿ" ಎಂದು ಅಗ್ನಿಯೇ ಆದಿತ್ಯನಲ್ಲಿದ್ದಾನೆಂದು ಕೇಳಿಸುತ್ತಿದೆ. ಆದಿತ್ಯನಲ್ಲಿ ಅಂತಃಸ್ಥನಾದವನು ಅಗ್ನಿಯಾದರೆ, ಕಣ್ಣಿನಲ್ಲಿಯೂ ಅವನೇ ಇರಬೇಕೆಂಬ ಪ್ರಶ್ನೆಗೆ ಅವಕಾಶವಿಲ್ಲ. ಏಕೆಂದರೆ "ಆದಿತ್ಯ ಚಕ್ಷುರ್ಭೂತ್ವಾಽಕ್ಷಿಣೀ ಪ್ರಾವಿಶತ್" (ಆದಿತ್ಯಮಂಡಲದಲ್ಲಿರುವವನೇ ಚಕ್ಷುಗೋಲಕದಲ್ಲಿ ಪ್ರವೇಶ ಮಾಡಿದನು) ಎಂಬ ಶ್ರುತಿಯಿಂದ ಆದಿತ್ಯ ಮತ್ತು ಕಣ್ಣಿನಲ್ಲಿರುವ ದೇವತೆಯಲ್ಲಿ ಏಕಪ್ರಕಾರತ್ವವು ಕೇಳಿಸುತ್ತಿದೆ. ಆದ್ದರಿಂದ ಆದಿತ್ಯನಲ್ಲಿ ಅಗ್ನಿ ಇದ್ದಾನೆಂದರೆ ಕಣ್ಣಿನಲ್ಲಿಯೂ ಸಹ ಅವನೇ ಇದ್ದಾನೆಂದು ಸಿದ್ಧವಾಗುತ್ತದೆ.

ಅಲ್ಲದೆ ಛಾಂದೋಗ್ಯೋಪನಿಷತ್ತಿನ ಈ ಪ್ರಕರಣದಲ್ಲಿಯೇ "ಅಥ ಹಾಗ್ನಯಃ ಸಮೂದಿರೇ" "ಗಾರ್ಹಪತ್ಯೋಽನುಶಶಾಸ" ಇತ್ಯಾದಿಯಾಗಿ ಅಗ್ನಿಶಬ್ದದ ಶ್ರವಣ ಅನೇಕ ಕಡೆ ಕಾಣಸುತ್ತಿದೆ.

**तत्वप्रकाशिका – नच वाच्यमग्नेरादित्यस्थत्वकथनमौपचारिकं किन्न स्यात् । 'यश्चासावादित्ये' इति श्रुतिविरोधादिति । 'सोऽहमस्मि स एवाहमस्मि' इत्यभ्यासात् । अभ्यासस्य च समाख्यातो बलवत्त्वात् । नच विष्णुग्रहणेऽपूर्वतयाऽभ्यासस्यापि बाधः । 'स य एतदेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकीभवति सर्वमायुरेति' इत्यर्थवादात् । अर्थवादस्य चापूर्वतायाः प्राबल्यात् । अतोऽक्ष्यादित्यस्थोऽग्निरेवेति स एवानन्दमयोऽपीति भावः । न केवलमग्नेरक्षिस्थत्वसिद्धावानन्दमयत्वप्राप्तिः किन्तु यद्विष्णुज्ञानादेव मोक्ष इति मतम्, तदपि बाधितं स्यादित्याह –**

ಪ್ರಶ್ನೆ - ಅಗ್ನಿಯು ಆದಿತ್ಯನಲ್ಲಿ ಇದ್ದಾನೆಂದು ಹೇಳಿದ್ದು ಕೇವಲ ಔಪಚಾರಿಕವೆಂದು ಏಕೆ ಆಗಬಾರದು? ಇಲ್ಲದಿದ್ದರೆ 'ಯಶ್ಚಾಸಾವಾದಿತ್ಯೇ' ಎಂಬ ಸಮಾಖ್ಯಾ ಶ್ರುತಿಯಿಂದ ವಿರೋಧ ಬರುತ್ತದೆ ಅಲ್ಲವೇ?

ಉತ್ತರ - ಯಾವ ವಿರೋಧವೂ ಬರುವುದಿಲ್ಲ. ಏಕೆಂದರೆ ಶ್ರುತಿಯಲ್ಲಿ "ಸೋಽಹಮಸ್ಮಿ" "ಸ ಏವಾಹಮಸ್ಮಿ" ಎಂದು 'ಅಹಮಸ್ಮಿ' ಎಂದು ಅನೇಕ ಬಾರಿ ಉಚ್ಚಾರಣೆ ಮಾಡಿದ್ದು ಕೇಳಿಸುತ್ತಿದೆ. ಈ ಅಭ್ಯಾಸವಾದರೂ ಸಮಾಖ್ಯಾಪ್ರಮಾಣಕ್ಕಿಂತ ಪ್ರಬಲವಾಗಿದೆ.

ಪ್ರಶ್ನೆ - ಛಾಂದೋಗ್ಯಶ್ರುತಿಯಲ್ಲಿರುವ "ಅಹಂ" ಶಬ್ದಕ್ಕೆ ಅಗ್ನಿಯೆಂಬ ಅರ್ಥವನ್ನು ಹೇಳದೆ 'ವಿಷ್ಣು' ಎಂದು ಅರ್ಥೈಸಿದರೆ, ಶ್ರುತಿಗೆ ಅಪೂರ್ವತಾ ಬರುತ್ತದೆ. ಇಂತಹ ಅಪೂರ್ವತಾದಿಂದ ಅಭ್ಯಾಸಕ್ಕೆ ಬಾಧ ಬರುತ್ತದಲ್ಲವೆ?

ಉತ್ತರ - ಇದು ಸರಿಯಲ್ಲ. ಏಕೆಂದರೆ ಮುಂದೆ "ಸ ಯ ಏತದೇವಂ ವಿದ್ವಾನುಪಾಸ್ತೇಽಪಹತೇ ಪಾಪಕೃತ್ಯಾಂ ಲೋಕೀಭವತಿ ಸರ್ವಮಾಯುರೇತಿ" (ಅಗ್ನಿಯು ಆದಿತ್ಯನಲ್ಲಿದ್ದಾನೆಂದು ತಿಳಿದ ಯಾವ ಪುರುಷನು ಅಗ್ನಿಯನ್ನು ಉಪಾಸನೆ ಮಾಡುತ್ತಾನೋ ಅವನ ಪಾಪಕರ್ಮಗಳೆಲ್ಲವೂ ನಾಶವಾಗಿ ಅಗ್ನಿಯ ಲೋಕದ ಪ್ರಾಪ್ತಿಯಾಗುತ್ತದೆ ಮತ್ತು ಮೋಕ್ಷವನ್ನು ಹೊಂದುತ್ತಾನೆ) ಎಂದು ಅರ್ಥವಾದವು ಕೇಳಿಸುತ್ತಿದೆ. ಈ ಅರ್ಥವಾದವು ಅಪೂರ್ವತಾಕ್ಕಿಂತ ಪ್ರಬಲವಾಗಿದೆ. ಆದ್ದರಿಂದ 'ಅಹಂ' ಶಬ್ದದಿಂದ ವಾಚ್ಯನಾದವನು ಅಗ್ನಿಯೇ ಆಗಿದ್ದಾನೆ.

ಆದ್ದರಿಂದ ಬಹಳವಾದ ಅಗ್ನಿಶ್ರುತಿ, ಅಭ್ಯಾಸ, ಅರ್ಥವಾದ ಇವುಗಳ ಸಹಾಯದಿಂದ ಕಣ್ಣು ಮತ್ತು ಸೂರ್ಯನಲ್ಲಿ ನಿಯಾಮಕನಾಗಿ ಇರುವವನು ಅಗ್ನಿಯೇ ಎಂದು ನಿಶ್ಚಯವಾಗುತ್ತದೆ. ಇದರಿಂದ ಅಗ್ನಿಯೇ ಆನಂದಮಯನೆಂದು ಸಿದ್ಧವಾಗುತ್ತದೆ. ಅಲ್ಲದೆ ಕೇವಲ ವಿಷ್ಣುವಿನ ಜ್ಞಾನದಿಂದಲೇ ಮೋಕ್ಷವೆಂದು ಹೇಳುವ ಸಿದ್ಧಾಂತವು ಬಾಧಿತವಾಗುತ್ತದೆ.

ಪರಿಪೂರ್ಣಚಂದ್ರಿಕಾ

**तत्वप्रकाशिका – अत इति ।। यतोऽग्निरक्षिस्थोऽतस्तज्ज्ञानान्मोक्षोऽपि भवेत् । 'तद्यथेति' तज्ज्ञानात् सर्वपापाश्लेषोक्तेः । तज्ज्ञानात्सर्वपापाश्लेषे च मोक्षस्यापि तदन्यथाऽनुपपत्त्यैवोपपत्तेरित्यर्थः । अत्राऽऽदित्यस्थत्वलिङ्गस्यापि विष्णौ समन्वयसिद्ध्यर्थं वक्रसङ्गत्याऽधिकरणारम्भ इति ज्ञातव्यम् । अग्नीनामिति बहुवचनमादिपदद्वयं च बह्वग्निश्रुतिसूचनाय प्रयुक्तम् ।**

ಯಾವ ಅಗ್ನಿಯು ಅಕ್ಷಿಸ್ಥನೋ ಅಂತಹವನ ಜ್ಞಾನದಿಂದಲೇ ಮೋಕ್ಷವು ಆಗುತ್ತದೆ. ಹೇಗೆಂಬುದನ್ನು "ತದ್ಯಥಾ" ಎಂಬ ವಾಕ್ಯದಿಂದ ಹೇಳುತ್ತಿದ್ದಾರೆ. ಅಗ್ನಿಜ್ಞಾನವಿರುವ ಪುರುಷನಿಗೆ ಯಾವ ಪಾಪಗಳ ಸಂಬಂಧವು ಆಗುವುದಿಲ್ಲವೆಂದು ಸರ್ವಪಾಪಾಶ್ಲೇಷತ್ವವನ್ನು ಛಾಂದೋಗ್ಯೋಪನಿಷತ್ತು ಹೇಳುತ್ತಿದೆ. ಅಂದರೆ ಸರ್ವಪಾಪಾಶ್ಲೇಷತ್ವವು ಮೋಕ್ಷವಾಗದೆ ಆಗುವುದಿಲ್ಲ. ಆದ್ದರಿಂದ ಅಗ್ನಿಜ್ಞಾನದಿಂದಲೇ ಮೋಕ್ಷವೆಂಬುದು ಅನ್ಯಥಾऽನುಪಪತ್ತಿಪ್ರಮಾಣದಿಂದ ಸಿದ್ಧವಾಗುತ್ತದೆ.

ಈ ಅಧಿಕರಣದಲ್ಲಿ ಆದಿತ್ಯಸ್ಥತ್ವವೆಂಬ ಲಿಂಗದ ಸಮನ್ವಯವನ್ನು ವಿಷ್ಣುವಿನಲ್ಲಿ ಮಾಡಬೇಕಾಗಿದೆ. ಆದ್ದರಿಂದಲೇ ವಕ್ರಸಂಗತಿಯಿಂದ ಅಧಿಕರಣವನ್ನು ಪ್ರಾರಂಭಿಸಿದ್ದಾರೆಂದು ತಿಳಿಯಬೇಕು.

ಭಾಷ್ಯದಲ್ಲಿ "ಅಗ್ನೀನಾಂ" ಎಂದು ಬಹುವಚನ ಮತ್ತು ಎರಡುಬಾರಿ ಪ್ರಯೋಗಿಸಲ್ಪಟ್ಟ 'ಆದಿ' ಪದಗಳು' ಅನೇಕ ಅಗ್ನಿಶ್ರುತಿಗಳಿವೆ ಎಂಬುದನ್ನು ಸೂಚಿಸಲು ಪ್ರಯೋಗ ಮಾಡಿದ್ದಾರೆ.

**तत्वप्रकाशिका – सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे – अत इति ।। विष्णुरेव चक्षुरन्तरः । 'एतदमृतमभयम्' इत्यमृतत्वाभयत्वोक्तेः । अमृतत्वादेश्च विष्णावेवोपपत्तेः । 'त्रिपादस्यामृतं दिवि' 'अभयं तितीर्षतां पारम्' इति श्रुतेः । नचाग्नेरमृतत्वाद्युपपद्यते । 'परि ह्येनं म्रियन्ते विद्युद्वृष्टिश्चन्द्रमा आदित्योऽग्निः' 'भीषास्मादग्निश्चेन्द्रश्च' इत्यादिश्रुतेरिति भावः ।**

ಸಿದ್ಧಾಂತವನ್ನು ಹೇಳುವ ಸೂತ್ರವನ್ನು ಹೇಳಿ ಸೂತ್ರದ ವ್ಯಾಖ್ಯಾನವನ್ನು "ಅತಃ" ಇತ್ಯಾದಿ ವಾಕ್ಯಗಳಿಂದ ಮಾಡುತ್ತಿದ್ದಾರೆ. ವಿಷ್ಣುವೇ ಕಣ್ಣಿನಲ್ಲಿ ನಿಯಾಮಕನಾಗಿದ್ದಾನೆ. ಏಕೆಂದರೆ ಶ್ರುತಿಯಲ್ಲಿ "ಏತದಮೃತಮಭಯಂ" ಎಂದು ಅಮೃತತ್ವ ಮತ್ತು ಅಭಯತ್ವವನ್ನು ಅಂತಸ್ಥನಾದವನಿಗೆ ಶ್ರುತಿಯಲ್ಲಿ ಹೇಳಲಾಗಿದೆ. ಈ ಅಮೃತತ್ವ ಮತ್ತು ಅಭಯತ್ವಗಳು ವಿಷ್ಣುವಿನ ಅಸಾಧಾರಣ ಧರ್ಮವಾಗಿವೆ. ಈ ವಿಷಯದಲ್ಲಿ "ತ್ರಿಪಾದಸ್ಯಾಮೃತಂ ದಿವಿ"(ಈ ವಿಷ್ಣುವಿನ ನಾಶರಹಿತವಾದ ಮೂರು ಸ್ವರೂಪಭೂತಾಂಶಗಳು ಪ್ರಕಾಶಮಾನವಾದ ಶ್ವೇತದ್ವೀಪ, ಅನಂತಾಸನ ಮತ್ತು ವೈಕುಂಠಲೋಕಗಳಲ್ಲಿ ಇವೆ) "ಅಭಯಂ ತಿತೀರ್ಷತಾಂ ಪಾರಮ್"(ಭಯರಹಿತನಾದ ವಿಷ್ಣುವು ಸಂಸಾರ ಸಾಗರವನ್ನು

ದಾಟಲು ಇಚ್ಛಿಸುವ ಜ್ಞಾನಿಗಳಿಗೆ ಆಶ್ರಯನಾಗಿದ್ದಾನೆ) ಇತ್ಯಾದಿ ಶ್ರುತಿಗಳೇ ಆಧಾರವಾಗಿವೆ. ಅಗ್ನಿದೇವತೆಗೆ ಅಮೃತತ್ವವಾಗಲಿ ಅಭಯತ್ವವಾಗಲಿ ಕೂಡುವುದಿಲ್ಲ. ಏಕೆಂದರೆ "ಪರಿಹ್ಯೇನಂ ಮ್ರಿಯಂತೇ ವಿದ್ಯುದ್ವೃಷ್ಟಿಶ್ಚಂದ್ರಮಾ ಆದಿತ್ಯೋಽಗ್ನಿಃ" (ಆ ಪರಮಾತ್ಮನ ಸಾಮರ್ಥ್ಯದಿಂದಲೇ ವಿದ್ಯುತ್, ವೃಷ್ಟಿ, ಚಂದ್ರ, ಸೂರ್ಯ, ಅಗ್ನಿ ಎಲ್ಲರೂ ನಾಶಹೊಂದುತ್ತಾರೆ), "ಭೀಷಾಸ್ಮಾದಗ್ನಿಶ್ಚೇಂದ್ರಶ್ಚ" (ಪರಮಾತ್ಮನ ಭಯದಿಂದಲೇ ಅಗ್ನಿ, ಇಂದ್ರಾದಿ ದೇವತೆಗಳು ತಮ್ಮ ತಮ್ಮ ಕರ್ತವ್ಯಗಳನ್ನು ಪಾಲನೆ ಮಾಡುತ್ತಾರೆ) ಇತ್ಯಾದಿ ಶ್ರುತಿಗಳು ಈ ವಿಷಯದಲ್ಲಿ ಪ್ರಮಾಣಗಳಾಗಿವೆ.

**तत्वप्रकाशिका – यदेवं निरवकाशत्वानेकत्वाभ्यां बलवल्लिङ्गबलाचक्षुरन्तःस्थस्य विष्णुत्वनिश्चयः किमु तदोभयथापि बलवत् श्रुतितोऽपीति भावेन सूत्रांशं प्रकारान्तरेण व्याचष्टे – ब्रह्मेति ।। नन्वेवं बलवच्छ्रुतिलिङ्गबलाद् विष्णुरेव चेदक्षिस्थस्तदादित्यस्थोऽपि स एव स्यात् तर्हि 'सोऽहमस्मि स एवाहमस्मि' इति श्रुतेः का गतिरित्यत आह – सोऽहमिति ।। अन्तर्यामिण्यहमादिशब्दवृत्तिं स्मारयति – अन्तर्यामिणमिति ।। एवं श्रुतेः सावकाशत्वेन तदनुयायिनोरभ्यासार्थवादयोरपि सुतरां सावकाशत्वम् ।। १३ ।।**

ಈ ರೀತಿಯಾಗಿ ನಿರವಕಾಶವಾದ್ದರಿಂದ ಮತ್ತು ಅನೇಕವಾದ್ದರಿಂದ ಮತ್ತು ಪ್ರಬಲವಾದ ಲಿಂಗಗಳ ಬಲದಿಂದ ಕಣ್ಣಿನಲ್ಲಿ ನಿಯಾಮಕನಾಗಿರುವವನು ವಿಷ್ಣುವೇ ಎಂದು ನಿಶ್ಚಯವಾಗುತ್ತದೆಂದು. ಆ ಎರಡೂ ರೀತಿಯಿಂದ ಪ್ರಬಲವಾದ ಶ್ರುತಿಯಿಂದ ವಿಷ್ಣುತ್ವ ನಿಶ್ಚಯವಾಗುತ್ತದೆ. ಈಅಭಿಪ್ರಾಯದಿಂದ ಇನ್ನೊಂದು ಪ್ರಕಾರವಾಗಿ ಸೂತ್ರವನ್ನು "ಬ್ರಹ್ಮ" ಎಂಬ ವಾಕ್ಯದಿಂದ ವ್ಯಾಖ್ಯಾನ ಮಾಡುತ್ತಿದ್ದಾರೆ.

ಪ್ರಶ್ನೆ - ಹಾಗಾದರೆ ಬಲವಾದ ಶ್ರುತಿ, ಲಿಂಗಗಳ ಬಲದಿಂದ ವಿಷ್ಣುವೇ ಕಣ್ಣಿನಲ್ಲಿ ನಿಯಾಮಕನಾದರೆ, ಆದಿತ್ಯನಲ್ಲಿಯೂ ನಿಯಾಮಕನಾಗಿರುವವನು ವಿಷ್ಣುವೇ ಆಗುತ್ತಾನೆ. ಹಾಗಾದರೆ ಶ್ರುತಿಯಲ್ಲಿರುವ "ಸೋಽಹಮಸ್ಮಿ" "ಸ ಏವಾಹಮಸ್ಮಿ" ಎಂದು ಅಗ್ನಿಯನ್ನು ಪ್ರತಿಪಾದನೆ ಮಾಡುವ ಶ್ರುತಿಗಳಿಗೆ ಏನು ಅರ್ಥ?

ಉತ್ತರ - ಈ ಪ್ರಶ್ನೆಗೆ ಉತ್ತರವನ್ನು "ಸೋಽಹಮಸ್ಮಿ" ಎಂಬ ವಾಕ್ಯದಿಂದ ಹೇಳುತ್ತಿದ್ದಾರೆ.

ಅಂತರ್ಯಾಮಿಯಲ್ಲಿ 'ಅಹಂ' ಇತ್ಯಾದಿ ಶಬ್ದಪ್ರವೃತ್ತಿ ಇರುತ್ತದೆಂಬುದನ್ನು "ಅಂತರ್ಯಾಮಿಣಾಂ" ಎಂಬ ಸ್ಮೃತಿ ಪ್ರಮಾಣದಿಂದ ತೋರಿಸುತ್ತಿದ್ದಾರೆ.

ಈ ರೀತಿಯಾಗಿ "ಸೋಽಹಮಸ್ಮಿ" ಇತ್ಯಾದಿ ಶ್ರುತಿಗಳು ಸಾವಕಾಶವಾಗಿವೆ. ಈ ಶ್ರುತಿಯನ್ನು ಅನುಸರಿಸಿರುವ ಅಭ್ಯಾಸ, ಅರ್ಥವಾದಗಳಿಗೂ ಸಹ ಸಾವಕಾಶತ್ವವನ್ನು ಹೇಳಲೇಬೇಕು. ಆದ್ದರಿಂದ ಕಣ್ಣಿನಲ್ಲಿ ನಿಯಾಮಕನಾಗಿರುವವನು ವಿಷ್ಣುವೇ ಎಂದು ಹೇಳಲು ಯಾವ ವಿರೋಧವೂ ಇಲ್ಲ.

ಪರಿಪೂರ್ಣಚಂದ್ರಿಕಾ

**भावदीपः** – ॥ **अग्निश्रुतीति** ॥ सा चानेकरूपाऽग्ने व्यक्ता । उच्यत इत्यन्तं भाष्यं सङ्गतिपरत्वेन व्याचष्टे – **यश्चेति** ॥ 'अक्ष्यादित्ययोरैक्याद्' इत्युक्तिलब्धमर्थमाह – **ततश्चेति** ॥ **अर्थादिति** ॥ द्वयोरेकदेवताधिष्ठानत्वेनाऽऽदित्यस्थस्यैवाक्षिस्थत्वादेकत्रोक्तावन्यत्राप्युक्तिरार्थिकीत्यर्थः ।

ಟೀಕೆಯಲ್ಲಿ 'ಅಗ್ನಿಶ್ರುತಿ' ಎಂದಿದೆ. ಇದರ ಅಭಿಪ್ರಾಯ ಈ ಶ್ರುತಿಯಲ್ಲಿ ವ್ಯಕ್ತನಾದ ಪರಬ್ರಹ್ಮನು ಇನ್ನು ಅನೇಕರೂಪವಾದ ಅಗ್ನಿಗಳಲ್ಲಿ ವ್ಯಕ್ತನಾಗಿದ್ದಾನೆಂದು ತಿಳಿಯಬೇಕು. ಭಾಷ್ಯದಲ್ಲಿರುವ 'ಉಚ್ಯತೇ' ಎಂಬಲ್ಲಿಯ ತನಕ ಸಂಗತಿಪರವಾಗಿ 'ಯಶ್ಚ' ಎಂಬ ಇತ್ಯಾದಿ ವಾಕ್ಯಗಳಿಂದ ವ್ಯಾಖ್ಯಾನ ಮಾಡುತ್ತಿದ್ದಾರೆ. ಭಾಷ್ಯದಲ್ಲಿರುವ 'ಅಕ್ಷ್ಯಾದಿತ್ಯಯೋರೈಕ್ಯಾದ್' ಎಂಬ ಮಾತಿನಿಂದ ಲಬ್ಧವಾದ ಅರ್ಥವನ್ನು 'ತತಶ್ಚ' ಇತ್ಯಾದಿ ವಾಕ್ಯಗಳಿಂದ ಹೇಳುತ್ತಿದ್ದಾರೆ.

ಟೀಕೆಯಲ್ಲಿ 'ಅರ್ಥಾತ್' ಎಂಬ ಪದವಿದೆ. ಇದರ ಅಭಿಪ್ರಾಯ ಚಕ್ಷುರಿಂದ್ರಿಯ ಮತ್ತು ಆದಿತ್ಯ ಮಂಡಲಗಳು ಒಬ್ಬನೇ ದೇವತೆಗೆ ಅದಿಷ್ಠಾನವಾಗಿರುವುದರಿಂದ ಆದಿತ್ಯಮಂಡಲದಲ್ಲಿ ಯಾವ ದೇವತೆ ಇರುತ್ತಾನೆಯೋ ಅವನೇ ಚಕ್ಷುರಿಂದ್ರಿಯದಲ್ಲಿಯೂ ಇರುತ್ತಾನೆಂದು ಅಭಿಪ್ರಾಯ. ಆದ್ದರಿಂದ ಆದಿತ್ಯ ಮಂಡಲದಲ್ಲಿ ಆನಂದಮಯನಿದ್ದಾನೆಂದರೆ ಚಕ್ಷುರಿಂದ್ರಿಯದಲ್ಲಿಯೂ ಆನಂದಮಯನಿದ್ದಾನೆಂದು ಅರ್ಥಾತ್ ಸಿದ್ಧವಾಗುತ್ತದೆ ಆದಿತ್ಯಮಂಡಲ ಹಾಗೂ ಚಕ್ಷುಸ್ಸು ಒಬ್ಬನೇ ದೇವತೆಗೆ ಅಧಿಷ್ಠಾನವಾಗಿರುವುದರಿಂದ ಆದಿತ್ಯನಲ್ಲಿರುವವನೇ ಚಕ್ಷುಸ್ಸಿನಲ್ಲಿದ್ದಾನೆಂದು ತಿಳಿಯುತ್ತದೆ. ಆದ್ದರಿಂದ ಒಂದು ಕಡೆಯಲ್ಲಿ ಇದ್ದಾನೆಂದು ಹೇಳಿದ್ದರಿಂದ ಮತ್ತೊಂದು ಕಡೆಯಲ್ಲಿಯೂ ಸಹ ಅವನೇ ಇದ್ದಾನೆಂದು ಹೇಳಿದರೆ ಆರ್ಥಿಕ ಪುನರುಕ್ತಿದೋಷ ಬರುತ್ತದೆಂದರ್ಥ.

**भावदीपः** – इत्यत्राप्यग्निरेवोच्यते इत्यस्य तात्पर्योक्तिः – **छन्दोगेति** ॥ चतुर्थेऽध्याय इति योज्यम् । कस्यचिद् अग्नेः । कुत्रेत्यतो 'य एष आदित्ये' इत्यादिपूर्वभाष्यमिति मत्वा तदुदाहरति – **य एष इति** ॥ दृश्यते दिव्यदृष्ट्या ज्ञानिभिरित्यर्थः । उवाच उपकोसलाय सत्यकामः । भाष्ये दृश्यत इत्यन्तोक्तावपि शेषोक्तिः सिद्धान्तोपयोगित्वायेति भावः । कथं प्रतीयत इत्याकाङ्क्षायां 'य एष आदित्ये' इत्यादिवाक्येन तत्प्रकारोक्तिर्वक्ष्यमाणदिशा सुज्ञानेति । 'य एष' इत्यादेः 'ऐक्याद्' इत्यन्तस्य तात्पर्यमाह – **तच्चेति** ॥ 'य एषोऽन्तरक्षिणि' इति वाक्योक्तमक्षिस्थत्वं च 'य एष' इत्यादिभाष्यवाक्यलब्धादग्नेरक्षिस्थत्वेनोच्यमानत्वाद्धेतोर्यद्यग्नेः स्यादित्यर्थः । उक्तमित्यन्तवाक्यतात्त्पर्यमाह – **तदेति** ॥ इति सङ्गतिसम्भवादवश्यं निर्णेयमित्यर्थः ।

ದಾಟಲು ಇಚ್ಛಿಸುವ ಜ್ಞಾನಿಗಳಿಗೆ ಆಶ್ರಯನಾಗಿದ್ದಾನೆ) ಇತ್ಯಾದಿ ಶ್ರುತಿಗಳೇ ಆಧಾರವಾಗಿವೆ. ಅಗ್ನಿದೇವತೆಗೆ ಅಮೃತತ್ವವಾಗಲಿ ಅಭಯತ್ವವಾಗಲಿ ಕೂಡುವುದಿಲ್ಲ. ಏಕೆಂದರೆ ''ಪರಿಹ್ಯೇನಂ ಮ್ರಿಯಂತೇ ವಿದ್ಯುದ್ವೃಷ್ಟಿಶ್ಚಂದ್ರಮಾ ಆದಿತ್ಯೋಽಗ್ನಿಃ'' (ಆ ಪರಮಾತ್ಮನ ಸಾಮರ್ಥ್ಯದಿಂದಲೇ ವಿದ್ಯುತ್, ವೃಷ್ಟಿ, ಚಂದ್ರ, ಸೂರ್ಯ, ಅಗ್ನಿ ಎಲ್ಲರೂ ನಾಶಹೊಂದುತ್ತಾರೆ), ''ಭೀಷಾಸ್ಮಾದಗ್ನಿಶ್ಚೇಂದ್ರಶ್ಚ'' (ಪರಮಾತ್ಮನ ಭಯದಿಂದಲೇ ಅಗ್ನಿ, ಇಂದ್ರಾದಿ ದೇವತೆಗಳು ತಮ್ಮ ತಮ್ಮ ಕರ್ತವ್ಯಗಳನ್ನು ಪಾಲನೆ ಮಾಡುತ್ತಾರೆ) ಇತ್ಯಾದಿ ಶ್ರುತಿಗಳು ಈ ವಿಷಯದಲ್ಲಿ ಪ್ರಮಾಣಗಳಾಗಿವೆ.

**तत्वप्रकाशिका – यदेवं निरवकाशत्वानेकत्वाभ्यां बलवल्लिङ्गबलाचक्षुरन्तःस्थस्य विष्णुत्वनिश्चयः किमु तदोभयथापि बलवत् श्रुतितोऽपीति भावेन सूत्रांशं प्रकारान्तरेण व्याचष्टे – ब्रह्मेति ।। नन्वेवं बलवच्छ्रुतिलिङ्गबलाद् विष्णुरेव चेदक्षिस्थस्तदादित्यस्थोऽपि स एव स्यात् तर्हि 'सोऽहमस्मि स एवाहमस्मि' इति श्रुतेः का गतिरित्यत आह – सोऽहमिति ।। अन्तर्यामिण्यहमादिशब्दवृत्तिं स्मारयति – अन्तर्यामिणमिति ।। एवं श्रुतेः सावकाशत्वेन तदनुयायिनोरभ्यासार्थवादयोरपि सुतरां सावकाशत्वम् ।। १३ ।।**

ಈ ರೀತಿಯಾಗಿ ನಿರವಕಾಶವಾದ್ದರಿಂದ ಮತ್ತು ಅನೇಕವಾದ್ದರಿಂದ ಮತ್ತು ಪ್ರಬಲವಾದ ಲಿಂಗಗಳ ಬಲದಿಂದ ಕಣ್ಣಿನಲ್ಲಿ ನಿಯಾಮಕನಾಗಿರುವವನು ವಿಷ್ಣುವೇ ಎಂದು ನಿಶ್ಚಯವಾಗುತ್ತದೆಂದು. ಆ ಎರಡೂ ರೀತಿಯಿಂದ ಪ್ರಬಲವಾದ ಶ್ರುತಿಯಿಂದ ವಿಷ್ಣುತ್ವ ನಿಶ್ಚಯವಾಗುತ್ತದೆ. ಈಅಭಿಪ್ರಾಯದಿಂದ ಇನ್ನೊಂದು ಪ್ರಕಾರವಾಗಿ ಸೂತ್ರವನ್ನು ''ಬ್ರಹ್ಮ'' ಎಂಬ ವಾಕ್ಯದಿಂದ ವ್ಯಾಖ್ಯಾನ ಮಾಡುತ್ತಿದ್ದಾರೆ.

ಪ್ರಶ್ನೆ - ಹಾಗಾದರೆ ಬಲವಾದ ಶ್ರುತಿ, ಲಿಂಗಗಳ ಬಲದಿಂದ ವಿಷ್ಣುವೇ ಕಣ್ಣಿನಲ್ಲಿ ನಿಯಾಮಕನಾದರೆ, ಆದಿತ್ಯನಲ್ಲಿಯೂ ನಿಯಾಮಕನಾಗಿರುವವನು ವಿಷ್ಣುವೇ ಆಗುತ್ತಾನೆ. ಹಾಗಾದರೆ ಶ್ರುತಿಯಲ್ಲಿರುವ ''ಸೋಽಹಮಸ್ಮಿ'' ''ಸ ಏವಾಹಮಸ್ಮಿ'' ಎಂದು ಅಗ್ನಿಯನ್ನು ಪ್ರತಿಪಾದನೆ ಮಾಡುವ ಶ್ರುತಿಗಳಿಗೆ ಏನು ಅರ್ಥ?

ಉತ್ತರ - ಈ ಪ್ರಶ್ನೆಗೆ ಉತ್ತರವನ್ನು ''ಸೋಽಹಮಸ್ಮಿ'' ಎಂಬ ವಾಕ್ಯದಿಂದ ಹೇಳುತ್ತಿದ್ದಾರೆ.

ಅಂತರ್ಯಾಮಿಯಲ್ಲಿ 'ಅಹಂ' ಇತ್ಯಾದಿ ಶಬ್ದಪ್ರವೃತ್ತಿ ಇರುತ್ತದೆಂಬುದನ್ನು ''ಅಂತರ್ಯಾಮಿಣಾಂ'' ಎಂಬ ಸ್ಮೃತಿ ಪ್ರಮಾಣದಿಂದ ತೋರಿಸುತ್ತಿದ್ದಾರೆ.

ಈ ರೀತಿಯಾಗಿ ''ಸೋಽಹಮಸ್ಮಿ'' ಇತ್ಯಾದಿ ಶ್ರುತಿಗಳು ಸಾವಕಾಶವಾಗಿವೆ. ಈ ಶ್ರುತಿಯನ್ನು ಅನುಸರಿಸಿರುವ ಅಭ್ಯಾಸ, ಅರ್ಥವಾದಗಳಿಗೂ ಸಹ ಸಾವಕಾಶತ್ವವನ್ನು ಹೇಳಲೇಬೇಕು. ಆದ್ದರಿಂದ ಕಣ್ಣಿನಲ್ಲಿ ನಿಯಾಮಕನಾಗಿರುವವನು ವಿಷ್ಣುವೇ ಎಂದು ಹೇಳಲು ಯಾವ ವಿರೋಧವೂ ಇಲ್ಲ.

**भावदीपः –** ।। **अग्निश्रुतीति** ।। सा चानेकरूपाऽग्रे व्यक्ता । उच्यत इत्यन्तं भाष्यं सङ्गतिपरत्वेन व्याचष्टे – **यश्चेति** ।। 'अक्ष्यादित्ययोरैक्याद्' इत्युक्तिलब्धमर्थमाह – **ततश्चेति** ।। **अर्थादिति** ।। द्वयोरेकदेवताधिष्ठानत्वेनाऽऽदित्यस्थस्यैवाक्षिस्थत्वादेकत्रोक्तावन्यत्राप्युक्तिरार्थिकीत्यर्थः ।

ಟೀಕೆಯಲ್ಲಿ 'ಅಗ್ನಿಶ್ರುತಿ' ಎಂದಿದೆ. ಇದರ ಅಭಿಪ್ರಾಯ ಈ ಶ್ರುತಿಯಲ್ಲಿ ವ್ಯಕ್ತನಾದ ಪರಬ್ರಹ್ಮನು ಇನ್ನು ಅನೇಕರೂಪವಾದ ಅಗ್ನಿಗಳಲ್ಲಿ ವ್ಯಕ್ತನಾಗಿದ್ದಾನೆಂದು ತಿಳಿಯಬೇಕು. ಭಾಷ್ಯದಲ್ಲಿರುವ 'ಉಚ್ಯತೇ' ಎಂಬಲ್ಲಿಯ ತನಕ ಸಂಗತಿಪರವಾಗಿ 'ಯಶ್ಚ' ಎಂಬ ಇತ್ಯಾದಿ ವಾಕ್ಯಗಳಿಂದ ವ್ಯಾಖ್ಯಾನ ಮಾಡುತ್ತಿದ್ದಾರೆ. ಭಾಷ್ಯದಲ್ಲಿರುವ 'ಅಕ್ಷ್ಯಾದಿತ್ಯಯೋರೈಕ್ಯಾದ್' ಎಂಬ ಮಾತಿನಿಂದ ಲಬ್ಧವಾದ ಅರ್ಥವನ್ನು 'ತತಶ್ಚ' ಇತ್ಯಾದಿ ವಾಕ್ಯಗಳಿಂದ ಹೇಳುತ್ತಿದ್ದಾರೆ.

ಟೀಕೆಯಲ್ಲಿ 'ಅರ್ಥಾತ್' ಎಂಬ ಪದವಿದೆ. ಇದರ ಅಭಿಪ್ರಾಯ ಚಕ್ಷುರಿಂದ್ರಿಯ ಮತ್ತು ಆದಿತ್ಯ ಮಂಡಲಗಳು ಒಬ್ಬನೇ ದೇವತೆಗೆ ಅದಿಷ್ಠಾನವಾಗಿರುವುದರಿಂದ ಆದಿತ್ಯಮಂಡಲದಲ್ಲಿ ಯಾವ ದೇವತೆ ಇರುತ್ತಾನೆಯೋ ಅವನೇ ಚಕ್ಷುರಿಂದ್ರಿಯದಲ್ಲಿಯೂ ಇರುತ್ತಾನೆಂದು ಅಭಿಪ್ರಾಯ. ಆದ್ದರಿಂದ ಆದಿತ್ಯ ಮಂಡಲದಲ್ಲಿ ಆನಂದಮಯನಿದ್ದಾನೆಂದರೆ ಚಕ್ಷುರಿಂದ್ರಿಯದಲ್ಲಿಯೂ ಆನಂದಮಯನಿದ್ದಾನೆಂದು ಅರ್ಥಾತ್ ಸಿದ್ಧವಾಗುತ್ತದೆ ಆದಿತ್ಯಮಂಡಲ ಹಾಗೂ ಚಕ್ಷುಸ್ಸು ಒಬ್ಬನೇ ದೇವತೆಗೆ ಅಧಿಷ್ಠಾನವಾಗಿರುವುದರಿಂದ ಆದಿತ್ಯನಲ್ಲಿರುವವನೇ ಚಕ್ಷುಸ್ಸಿನಲ್ಲಿದ್ದಾನೆಂದು ತಿಳಿಯುತ್ತದೆ. ಆದ್ದರಿಂದ ಒಂದು ಕಡೆಯಲ್ಲಿ ಇದ್ದಾನೆಂದು ಹೇಳಿದ್ದರಿಂದ ಮತ್ತೊಂದು ಕಡೆಯಲ್ಲಿಯೂ ಸಹ ಅವನೇ ಇದ್ದಾನೆಂದು ಹೇಳಿದರೆ ಆರ್ಥಿಕ ಪುನರುಕ್ತಿದೋಷ ಬರುತ್ತದೆಂದರ್ಥ.

**भावदीपः –** इत्यत्राप्यग्निरेवोच्यते इत्यस्य तात्पर्योक्तिः – **छन्दोगेति** ।। चतुर्थेऽध्याय इति योज्यम् । कस्यचिद् अग्नेः । कुत्रेत्यतो 'य एष आदित्ये' इत्यादिपूर्वभाष्यमिति मत्वा तदुदाहरति – **य एष इति** ।। दृश्यते दिव्यदृष्ट्या ज्ञानिभिरित्यर्थः । उवाच उपकोसलाय सत्यकामः । भाष्ये दृश्यत इत्यन्तोक्तावपि शेषोक्तिः सिद्धान्तोपयोगित्वायेति भावः । कथं प्रतीयत इत्याकाङ्क्षायां 'य एष आदित्ये' इत्यादिवाक्येन तत्प्रकारोक्तिर्वक्ष्यमाणदिशा सुज्ञानेति । 'य एष' इत्यादेः 'ऐक्याद्' इत्यन्तस्य तात्पर्यमाह – **तच्चेति** ।। 'य एषोऽन्तरक्षिणि' इति वाक्योक्तमक्षिस्थत्वं च 'य एष' इत्यादिभाष्यवाक्यलब्धादग्नेरक्षिस्थत्वेनोच्यमानत्वाद्धेतोर्यद्यग्नेः स्यादित्यर्थः । उक्तमित्यन्तवाक्यतात्पर्यमाह – **तदेति** ।। इति सङ्गतिसम्भवादवश्यं निर्णेयमित्यर्थः ।

"ಇತ್ಯತ್ರಾಪಿ ಅಗ್ನಿರೇವೋಚ್ಯತೇ" ಎಂಬ ಭಾಷ್ಯದ ಮಾತಿಗೆ ತಾತ್ಪರ್ಯವನ್ನು "ಛಂದೋಗ" ಎಂಬ ಮಾತಿನಿಂದ ಹೇಳುತ್ತಿದ್ದಾರೆ. ಇಲ್ಲಿ ಛಾಂದೋಗ್ಯದ ನಾಲ್ಕನೆಯ ಅಧ್ಯಾಯವೆಂದು ಯೋಜನೆ ಮಾಡಿಕೊಳ್ಳಬೇಕು. ಟೀಕೆಯಲ್ಲಿ "ಕಸ್ಯಚಿತ್" ಎಂದಿದೆ. ಇದರ ಅಭಿಪ್ರಾಯ ಅಗ್ನಿ ಎಂದು ತಿಳಿಯಬೇಕು. ಎಲ್ಲಿ? ಎಂದು ಪ್ರಶ್ನೆ ಬಂದರೆ - "ಯ ಏಷ ಆದಿತ್ಯೇ" ಇತ್ಯಾದಿ ಹಿಂದಿನ ಭಾಷ್ಯವನ್ನು ತಿಳಿದು ಆ ಶ್ರುತಿಯನ್ನೇ "ಯ ಏಷಃ" ಇತ್ಯಾದಿ ಮಂತ್ರಗಳನ್ನು ಉದಾಹರಿಸುತ್ತಿದ್ದಾರೆ. "ದೃಶ್ಯತೇ" ಎಂದರೆ ಜ್ಞಾನಿಗಳ ದಿವ್ಯದೃಷ್ಟಿಗೆ ಗೋಚರನಾಗುತ್ತಾನೆಂದರ್ಥ. "ಉವಾಚ" ಎಂದರೆ ಉಪಕೋಸಲನನ್ನು ಕುರಿತು ಸತ್ಯಕಾಮರು ಹೇಳಿದರು ಎಂದರ್ಥ. ಭಾಷ್ಯದಲ್ಲಿ "ಯ ಏಷೋಽಂತರಕ್ಷಣಿ ಪುರುಷೋ ದೃಶ್ಯತೇ" ಎಂದಷ್ಟೇ ಶ್ರುತಿಯನ್ನು ಹೇಳಿದ್ದರೂ ಸಹ ಟೀಕೆಯಲ್ಲಿ ಶ್ರುತಿಯ ಶೇಷವನ್ನು ಪೂರಣ ಮಾಡಿದ್ದರ ಉದ್ದೇಶ ಸಿದ್ಧಾಂತಕ್ಕೆ ಅನುಕೂಲಕ್ಕೋಸ್ಕರವೆಂದು ತಿಳಿಯಬೇಕು. ಭಾಷ್ಯದಲ್ಲಿರುವ 'ಉಕ್ತಂ' ಎಂಬಲ್ಲಿಯ ತನಕ ತಾತ್ಪರ್ಯವನ್ನು 'ತದಾ' ಎಂಬ ವಾಕ್ಯದಿಂದ ಹೇಳಿದ್ದಾರೆ. "ಇತಿ" ಎಂದರೆ ಸಂಗತಿಯು ಇರುವುದರಿಂದ ಅವಶ್ಯವಾಗಿ ನಿರ್ಣಯ ಮಾಡಬೇಕಾಗಿದೆ ಎಂದರ್ಥ.

**भावदीपः** – ननु पूर्वत्र 'यश्चासावादित्ये' इत्यादित्यस्थत्वं नाम विष्णोरादित्यदेवतास्थत्वम् । यदाहुस्तद्भाष्ये 'स विष्णुस्सर्वजीवेषु नृषु देवेषु च स्थितः । एक एव' इत्यादि । उक्तं च प्राग् 'भेदव्यपदेशाच्च' इत्यत्र 'स यश्चायम्' इत्यानन्दमयस्यापकृष्टोत्कृष्टजीवेषु पुरुषादित्यदोषलक्षितेषु स्थितिकथनादिति । तथा चार्थादापद्यमानमक्षिस्थत्वमप्यक्षिदेवतास्थत्वमेव स्यात् । अत्र चाक्षिस्थत्वं नामाक्षिगोलकस्थत्वम्।'य एष आदित्ये' इत्यादित्यस्थत्वमप्यादित्यमण्डलस्थत्वमेवेति अक्ष्यादित्ययोरेकविधत्वादित्यादिवक्ष्यमाणटीकावाक्यादेवावसीयते ।

ಅಕ್ಷೇಪ - ಹಿಂದೆ "ಯಶ್ಚಾಸಾವಾದಿತ್ಯೇ" ಎಂಬುದಾಗಿ ಆದಿತ್ಯಸ್ಥತ್ವ ಶಬ್ದಕ್ಕೆ ವಿಷ್ಣು ಆದಿತ್ಯದೇವತೆಯಲ್ಲಿ ಇದ್ದಾನೆ ಎಂಬ ಅರ್ಥವನ್ನು ಹೇಳಿದ್ದರು. ಏಕೆಂದರೆ ಆ ಶ್ರುತಿಯ ಭಾಷ್ಯದಲ್ಲಿ "ಸ ವಿಷ್ಣುಃ ಸರ್ವಜೀವೇಷು ನೃಷು ದೇವೇಷು ಚ ಸ್ಥಿತಃ । ಏಕ ಏವ" - ವಿಷ್ಣು ಸಕಲಜೀವರಲ್ಲಿ ಮನುಷ್ಯರಲ್ಲಿ ದೇವತೆಗಳಲ್ಲಿ ಏಕಾಕಿಯಾಗಿ ನೆಲೆಸಿದ್ದಾನೆಂದು ಹೇಳಿದ್ದಾರೆ. ಆನಂದಮಯಾಧಿಕರಣದ "ಭೇದವ್ಯಪದೇಶಾಚ್ಚ" ಸೂತ್ರದಲ್ಲಿಯೂ ಸಹ ಪುರುಷ ಶಬ್ದದಿಂದ ಉಪಲಕ್ಷರಾದ ಉತ್ಕೃಷ್ಟ ಹಾಗೂ ಅಪಕೃಷ್ಟ ಜೀವರಲ್ಲಿ ಪರಮಾತ್ಮ ನೆಲಸಿದ್ದಾನೆಂದು ಹೇಳಿದ್ದಾರೆ.

ಆದ್ದರಿಂದ ಆದಿತ್ಯಸ್ಥತ್ವದಿಂದ ಅರ್ಥಾತ್ ಆಪದ್ಯಮಾನವಾದ ಅಕ್ಷಿತತ್ವಶಬ್ದಕ್ಕೆ ಅಕ್ಷಿದೇವತೆಯಲ್ಲಿಯೇ ಇದ್ದಾನೆಂದು ಆನಂದಮಯಾಧಿಕರಣದಲ್ಲಿ ಹೇಳಬೇಕು.

ಆದರೆ ಪ್ರಕೃತ ಅಕ್ಷಿಸ್ಥತ್ವಶಬ್ದಕ್ಕೆ ಅಕ್ಷಿಗೋಲಕದಲ್ಲಿದ್ದಾನೆಂದೇ ಅರ್ಥ ಹೊರತು ಅಕ್ಷಿದೇವತೆಯಲ್ಲಿ ಇದ್ದಾನೆಂದು ಅರ್ಥವಲ್ಲ. ಏಕೆಂದರೆ "ಯ ಏಷ ಆದಿತ್ಯೇ" ಎಂದು ಅಕ್ಷಿಸ್ಥತ್ವವೆಂದರೆ ಅಕ್ಷಿ

ಗೋಲಕದಲ್ಲಿರುವುದು ಎಂದರ್ಥ, ಆದ್ದರಿಂದ "ಯ ಏಷಃ ಆದಿತ್ಯೇ" ಎಂಬಲ್ಲಿ ಆದಿತ್ಯಸ್ಥತ್ವಶಬ್ದಕ್ಕೂ ಸಹ ಆದಿತ್ಯ ಮಂಡಲದಲ್ಲಿಯೇ ಇದ್ದಾನೆಂದು ಅರ್ಥ ಮಾಡಬೇಕು. ಏಕೆಂದರೆ "ಅಕ್ಷಿ ಹಾಗೂ ಆದಿತ್ಯ ಮಂಡಲಗಳಿಗೆ ಏಕವಿಧತ್ವವಿರುವುದರಿಂದ" ಹೀಗೆ ಮುಂದಿನ ಟೀಕಾವಾಕ್ಯದಿಂದ ಅಕ್ಷಿಗೋಲಕದಲ್ಲಿ ಇದ್ದಾನೆಂದು ಸ್ಪಷ್ಟವಾಗುತ್ತದೆ.

**भावदीपः –** तथाच कथमन्यस्याक्षिस्थत्वे प्राचीनमप्यन्यत् स्यादिति पूर्वपक्षे तदाक्षेपः सिद्धान्ते चात्राक्षिस्थत्वं विष्णोश्चेत्, प्राचीनमपि विष्णोरेवेति समाधानं चेति चेदत्राहुः । वक्ष्यमाणदिशा वामनिभामनिशब्दोक्त सर्वस्त्रीपुंसप्रेरकत्वेनाग्रेस्तत्तदक्षिस्थत्वे स एव पूर्वत्राप्युक्तादित्यमण्डलस्थ आपन्न इति तेनैवोपपत्तौ तत्रस्थतया किमीश्वरेण इत्याक्षेपे वक्ष्यमाणयुक्तिभिरन्यस्य केवलस्य प्रेरकत्वानुपपत्त्या चाक्षिस्थस्य विष्णुत्वे पागादित्यमण्डलस्थोऽप्यक्ष्यादित्य देवतास्थोऽपि स एवेति सिद्ध्यतीति ।

ಆಕ್ಷೇಪ - ಆದ್ದರಿಂದ ಒಬ್ಬನು ಅಕ್ಷಿಸ್ಥನಾದರೇ ಆನಂದಮಯಾಧಿಕರಣದಲ್ಲಿ ಪ್ರಸಕ್ತನಾದವನೂ ಸಹ ಅಕ್ಷಿಸ್ಥನೇ ಆಗಬೇಕೆಂದು ಹೇಗೆ ಪೂರ್ವಪಕ್ಷ ಮಾಡುತ್ತಿರಿ? ಮತ್ತು ಈ ಅಧಿಕರಣದಲ್ಲಿ ಅಕ್ಷಿಸ್ಥನಾದವನು ವಿಷ್ಣುವೆಂದು ನಿರ್ಣಯಿಸಿದ ಮಾತ್ರಕ್ಕೆ ಆನಂದಮಯಾಧಿಕರಣದ ಅಕ್ಷಿಸ್ಥನೂ ಸಹ ವಿಷ್ಣುವೇ ಆಗುತ್ತಾನೆಂಬ ಸಿದ್ಧಾಂತವನ್ನು ಹೇಗೆ ಮಾಡುತ್ತೀರಿ?

ಸಮಾಧಾನ - ಮುಂದೆ ಹೇಳುವ ಪ್ರಕಾರ ವಾಮನಿ ಮತ್ತು ಭಾಮನಿ ಶಬ್ದಗಳಿಂದ ಪ್ರತಿಪಾದ್ಯನಾದವನು, ಸಕಲ ಸ್ತ್ರೀ ಪುರುಷ ಪ್ರೇರಕನಾದ ಅಗ್ನಿಯೇ ಆಗಿದ್ದಾನೆ. ಇಂತಹ ಅಗ್ನಿಯು ಆಯಾ ಸ್ತ್ರೀ ಪುರುಷರ ಕಣ್ಣಿನಲ್ಲಿದ್ದಾನೆಂದು ನಿರ್ಣಯವಾದ ಮೇಲೆ ಹಿಂದಿನ ಆನಂದಮಯಾಧಿಕರಣದಲ್ಲಿ ಉಕ್ತನಾದ ಆದಿತ್ಯಮಂಡಲಸ್ಥನೂ ಸಹ ಅಗ್ನಿಯೇ ಆಗುತ್ತಾನೆ. ಹೀಗಿರುವಾಗ ಈಶ್ವರನನ್ನು ಚಕ್ಷುರಿಂದ್ರಿಯದಲ್ಲಿದ್ದಾನೆಂದು ಏಕೆ ಒಪ್ಪಬೇಕು? ಎಂದು ಆಕ್ಷೇಪ ಮಾಡಿದಾಗ ಮುಂದೆ ಹೇಳುವ ಯುಕ್ತಿಗಳಿಂದ ಅಗ್ನಿ ಮೊದಲಾದ ಇತರ ದೇವತೆಗಳು ಸ್ವತಂತ್ರವಾಗಿ ಪ್ರೇರಕರಾಗುವುದಿಲ್ಲ. ಆದ್ದರಿಂದ ವಿಷ್ಣುವನ್ನೇ ಅಕ್ಷಿಸ್ಥವೆನ್ನಬೇಕು. ಹೀಗೆ ಈ ಅಧಿಕರಣದಲ್ಲಿ ಸಿದ್ಧವಾದಮೇಲೆ ಹಿಂದಿನ ಆನಂದಮಯಾಧಿಕರಣದಲ್ಲಿ ಹೇಳಲ್ಪಟ್ಟ ಆದಿತ್ಯ ಮಡಲದಲ್ಲಿರುವವನೂ ಸಹ ವಿಷ್ಣುವೇ ಆಗುತ್ತಾನೆ ಎಂದು ಸಿದ್ಧವಾಗುತ್ತದೆಂದು ಕೆಲವರು ಉತ್ತರಿಸುತ್ತಾರೆ.

**भावदीपः –** अन्ये तूपनिषद्भाष्यादावादित्यादेरभिमानिदेवतात्वोपगमेन तत्स्थत्वार्थोक्तावप्यत्र भाष्ये सर्वश्रुतावादित्यादिपदेन मण्डलादिजडमेव पूर्वोत्तर पक्षयोरुपेत्याऽऽक्षेपसमाधी । यथोत्तरनये 'य आत्मनि तिष्ठन्' इत्यादावात्मादिशब्दस्य तदभिमानिचतुर्मुखरूपार्थस्य बृहद्भाष्योक्तत्वेऽपीह भाष्ये जीवार्थत्वमेवोपेत्य

जीवान्तर्यामिणो भेदोक्तिः 'भेदेनैनम्' इति सूत्रे, तथाऽत्रापि । पूर्वटीका तु पुरुषपदोक्तजीवाभिप्राया । अत एव तत्र 'स यश्चायं पुरुषे' इत्येव भाष्योक्तिरित्याहुः ।

ಇನ್ನು ಕೆಲವರು ಉಪನಿಷದ್‌ಭಾಷ್ಯಾದಿಗಳಲ್ಲಿ ಆದಿತ್ಯಾದಿಶಬ್ದಗಳಿಗೆ ಅಭಿಮಾನಿದೇವತೆಗಳೆಂದು ಹೇಳಿರುವುದರಿಂದ ಆದಿತ್ಯನಲ್ಲಿ ಇದ್ದಾನೆಂದು ಹೇಳಿದರೆ ಅಭಿಮಾನಿದೇವತೆಗಳಲ್ಲಿದ್ದಾನೆಂದು ತಿಳಿಯಬೇಕು. ಆದರೆ ಪ್ರಕೃತ ಅಧಿಕರಣದ ಭಾಷ್ಯದಲ್ಲಿ ಆದಿತ್ಯಾದಿ ಪದಗಳಿಗೆ ಆದಿತ್ಯ ಮಂಡಲ ಮೊದಲಾದ ಜಡವಾಚಕಗಳನ್ನು ಅಂಗೀಕರಿಸುವ ಮೂಲಕ ಆಕ್ಷೇಪ ಮತ್ತು ಸಮಾಧಾನವನ್ನು ಮಾಡಿದ್ದಾರೆ. ಏಕೆಂದರೆ ಮುಂದಿನ ಅಧಿಕರಣದಲ್ಲಿ ಹೀಗೆ ಹೇಳಿದ್ದಾರೆ - "ಯ ಆತ್ಮನಿ ತಿಷ್ಠನ್" ಇತ್ಯಾದಿ ವಾಕ್ಯಗಳಲ್ಲಿ 'ಆತ್ಮಾದಿ' ಶಬ್ದಕ್ಕೆ ತದಭಿಮಾನಿಯಾದ ಚತುರ್ಮುಖಬ್ರಹ್ಮನೆಂಬ ಅರ್ಥವನ್ನು ಬೃಹದ್ಭಾಷ್ಯದಲ್ಲಿ ಹೇಳಿದ್ದರು. ಈ ಅಧಿಕರಣದ ಭಾಷ್ಯದಲ್ಲಿ ಜೀವನೆಂಬ ಅರ್ಥವನ್ನೇ ಅಂಗೀಕರಿಸಿ ಜೀವಾಂತರ್ಯಾಮಿಗೂ ಜೀವನಿಗೂ ಭೇದವನ್ನು "ಭೇದೇನೈವಮ್" ಎಂಬ ಸೂತ್ರದಲ್ಲಿ ಹೇಳಿದ್ದಾರೆ. ಅದರಂತೆ ಇಲ್ಲಿಯೂ ತಿಳಿಯಬೇಕು. ಆದ್ದರಿಂದಲೇ ಆ ಸೂತ್ರದ ಭಾಷ್ಯದಲ್ಲಿ "ಸ ಯಶ್ಚಾಯಂ ಪುರುಷೇ" ಎಂದಷ್ಟೇ ಹೇಳಿದ್ದಾರೆ. ಹೀಗೆ ಕೆಲವರ ಸಮಾಧಾನ.

**भावदीपः** – चन्द्रिकायां तु तत्त्वप्रदीपादिप्राचीनटीकारीत्या आदित्यादिपदानाम् आदित्यादिदेवतार्थत्वमेवोपेत्य अग्नेरक्षिदेवतास्थत्वे प्राचीनादित्यदेवतास्थोऽपि स एवेत्याक्षेपे अक्षिदेवतास्थस्य विष्णुत्वादादित्यदेवतास्थोऽपि स एवेति समाधिरिति सङ्गतिरुपपादिता ।

ಚಂದ್ರಿಕಾಗ್ರಂಥದಲ್ಲಿ ತತ್ವಪ್ರದೀಪ ಮೊದಲಾದ ಪ್ರಾಚೀನಟೀಕಾಕಾರರ ಪಕ್ಷವನ್ನು ಒಪ್ಪಿ ಆದಿತ್ಯಾದಿ ಪದಗಳಿಗೆ ಆದಿತ್ಯಾದಿ ದೇವತೆಗಳೆಂಬ ಅರ್ಥವನ್ನೇ ಸ್ವೀಕರಿಸಿದ್ದಾರೆ. ಆದ್ದರಿಂದ ಅಗ್ನಿಯು ಅಕ್ಷಿ ದೇವತೆಯಲ್ಲಿ ಇದ್ದಾನೆಂದು ಇಲ್ಲಿ ಹೇಳಿದರೆ ಹಿಂದೆ ಆದಿತ್ಯದೇವತೆಯಲ್ಲಿಯೂ ಸಹ ಅಗ್ನಿ ಇದ್ದಾನೆಂದು ಆಕ್ಷೇಪ ಬರುತ್ತದೆ. ವಿಷ್ಣು ಅಕ್ಷಿದೇವತೆಯಲ್ಲಿ ಇದ್ದಾನೆಂದು ನಿರ್ಣಯವಾದರೆ ಆದಿತ್ಯನಲ್ಲಿಯೂ ವಿಷ್ಣುವೇ ಇದ್ದಾನೆಂದು ನಿರ್ಣಯವಾಗುತ್ತದೆ. ಹೀಗೆ ಹಿಂದಿನ ಅಧಿಕರಣದಿಂದ ಈ ಅಧಿಕರಣಕ್ಕೆ ಸಂಗತಿಯನ್ನು ಹೇಳಿದ್ದಾರೆ.

**भावदीपः** – सङ्गतिपरतया व्याख्यातमेव भाष्यं पूर्वपक्षतद्युक्तितत्फलोक्तिपरतयाऽपि व्याकुर्वन् तत्राप्यग्निरेवोच्यत इति प्रतिज्ञार्थं तावदाह – **य एषोऽन्तरक्षणीति** ।। कुत इत्यत आदित्यस्थत्वादिति भावेन प्रवृत्तस्य 'य एष आदित्ये' इत्यादेरत इत्यन्तस्य भाष्यस्यात इत्युक्त्या यत इत्यध्याहृत्यार्थमाह – **यत इति** ।

ಸಂಗತಿಪರವಾಗಿಯೇ ವಾಖ್ಯಾನಿಸಿದ ಭಾಷ್ಯವನ್ನು ಪೂರ್ವಪಕ್ಷ ಹಾಗೂ ಪೂರ್ವಪಕ್ಷಯುಕ್ತಿಯನ್ನು ಪೂರ್ವಪಕ್ಷಫಲ ಪರವಾಗಿ ವ್ಯಾಖ್ಯಾನಿಸುತ್ತಾ ಅಗ್ನಿಯೇ ಪ್ರತಿಪಾದ್ಯನಾಗಿದ್ದಾನೆಂಬ ಪ್ರತಿಜ್ಞಾಭಾಗವನ್ನು "ಯ ಏಷೋಽನ್ತರಕ್ಷಣಿ" ಇತ್ಯಾದಿ ವಾಕ್ಯದಿಂದ ಪ್ರತಿಪಾದಿಸುತ್ತಿದ್ದಾರೆ. ಏಕೆಂದರೆ ಅಗ್ನಿಯೇ ಆದಿತ್ಯನಲ್ಲಿದ್ದಾನೆ. ಈ ಅಭಿಪ್ರಾಯದಿಂದ ಹೊರಟಿರುವ "ಯ ಏಷಃ ಆದಿತ್ಯೇ" ಎಂಬಲ್ಲಿಂದ ಪ್ರಾರಂಭಿಸಿ "ಅತಃ" ಎಂಬಲ್ಲಿಯ ತನಕದ ಭಾಷ್ಯವನ್ನು "ಯತಃ" ಎಂಬುದರಿಂದ ವ್ಯಾಖ್ಯಾನಿಸುತ್ತಿದ್ದಾರೆ. ಭಾಷ್ಯದಲ್ಲಿ "ಅತಃ" ಎಂದಿರುವುದರಿಂದ "ಯತಃ" ಎಂಬ ಪದವನ್ನು ಅಧ್ಯಾಹಾರ ಮಾಡಿಕೊಳ್ಳಬೇಕು.

**भावदीपः** – भाष्ये युक्तिसूचनायाग्नीनामित्युक्तावप्याकाङ्क्षाक्रमेण तद् व्याख्यातुं श्रौताहमादिपदस्यैकवचनानुरोधेनाग्नेरित्युक्तम् । श्रुतौ स एवेत्युक्तेरग्नेरेवेत्युक्तम् ।। अत एवेति।। अग्नेरादित्यस्थत्वादेवेत्यर्थः ।

अक्ष्यादित्ययोरैक्यादिति वाक्यमक्षिस्थोऽग्निरित्यत्रादित्यस्थत्वस्यैव हेतुत्वोपपादकत्वेन व्यावर्त्य शङ्कापूर्वं व्याचष्टे – **नच वाच्यमिति ।।**

ಭಾಷ್ಯದಲ್ಲಿ ಯುಕ್ತಿಯನ್ನು ಸೂಚನೆ ಮಾಡುವುದಕ್ಕಾಗಿ "ಅಗ್ನೀನಾಮ್" ಎಂದು ಹೇಳಿರಬಹುದಿತ್ತು. ಆದರೆ ಆಕಾಂಕ್ಷಾಕ್ರಮದಿಂದ ಅದನ್ನು ವ್ಯಾಖ್ಯಾನಿಸಲು ಶ್ರುತಿಯಲ್ಲಿ ಏಕವಚನದಿಂದ ಕೂಡಿರುವ "ಅಹಂ" ಮೊದಲಾದ ಪದವಿರುವುದರಿಂದ "ಅಗ್ನೇಃ" ಎಂದೇ ಟೀಕೆಯಲ್ಲಿ ಹೇಳಿದ್ದಾರೆ. ಶ್ರುತಿಯಲ್ಲಿರುವ "ಸ ಏವ" ಎಂಬುದಕ್ಕೆ "ಅಗ್ನೇರೇವ" ಎಂಬುದು ವ್ಯಾಖ್ಯಾನವಾಗಿದೆಯೆಂದು ತಿಳಿಯಬೇಕು. "ಅತ ಏವ" ಎಂಬುದಕ್ಕೆ ಅಗ್ನಿಯು ಆದಿತ್ಯನಲ್ಲಿ ಇರುವವನೆಂದು ಅರ್ಥ.

"ಅಕ್ಷ್ಯಾದಿತ್ಯಯೋರೈಕ್ಯಾತ್"- "ಅಕ್ಷಿ ಹಾಗೂ ಆದಿತ್ಯರಿಗೆ ಐಕ್ಯವಿರುವುದರಿಂದ" ಎಂಬ ವಾಕ್ಯವನ್ನು ಅಗ್ನಿಯು ಅಕ್ಷಿಸ್ಥನಾಗಿದ್ದಾನೆನ್ನಲು ಆದಿತ್ಯಸ್ಥವೇ ಹೇತುವಾಗಿದೆ ಎಂಬುದನ್ನು ಉಪಪಾದಿಸುವುದಕ್ಕಾಗಿ ವ್ಯಾವರ್ತ್ಯವಾದ ಶಂಕೆಯನ್ನು ತೋರಿಸುವ ಮೂಲಕ "ನಚ" ಎಂಬ ವಾಕ್ಯದಿಂದ ವ್ಯಾಖ್ಯಾನಿಸುತ್ತಿದ್ದಾರೆ.

**भावदीपः** – आदित्यः आदित्यमण्डलाभिमानी चक्षुरूपान्तरेण चक्षुर्देवता भूत्वा अक्षिणी गोलके प्राविशदित्यैतरेयश्रुतावादित्यमण्डलस्य यद्देवताकत्वं चक्षुर्गोलकस्यापि तद्देवताकत्वरूपैकविधत्वोक्तेरित्यर्थः । भाष्यस्थैक्यपदमेकविधत्वपरम् । अक्ष्यादित्यपदे तु जडपरे इति भावः ।

"ಆದಿತ್ಯಃ ಆದಿತ್ಯಮಂಡಲಾಭಿಮಾನೀ ಚಕ್ಷುಃ ರೂಪಾಂತರೇಣ ಚಕ್ಷುರ್ದೇವತಾ ಭೂತ್ವಾ ಅಕ್ಷಿಣೀ ಗೋಲಕೇ ಪ್ರಾವಿಶತ್"- ಆದಿತ್ಯ ಮಂಡಲಾಭಿಮಾನಿಯಾದವನು, ಚಕ್ಷುಃ = ಮತ್ತೊಂದು ರೂಪದಿಂದ ಚಕ್ಷುರ್ದೇವತೆಯು ಭೂತ್ವಾ = ಆಗಿ, ಅಕ್ಷಿಣೀ = ಅಕ್ಷಿಗೋಲಕದಲ್ಲಿ, ಪ್ರಾವಿಶತ್ = ಪ್ರವೇಶಿಸಿದನು. ಹೀಗೆ

जीवान्तर्यामिणो भेदोक्तिः 'भेदेनैनम्' इति सूत्रे, तथाऽत्रापि । पूर्वटीका तु पुरुषपदोक्तजीवाभिप्राया । अत एव तत्र 'स यश्चायं पुरुषे' इत्येव भाष्योक्तिरित्याहुः ।

ಇನ್ನು ಕೆಲವರು ಉಪನಿಷದ್‌ಭಾಷ್ಯಾದಿಗಳಲ್ಲಿ ಆದಿತ್ಯಾದಿಶಬ್ದಗಳಿಗೆ ಅಭಿಮಾನಿದೇವತೆಗಳೆಂದು ಹೇಳಿರುವುದರಿಂದ ಆದಿತ್ಯನಲ್ಲಿ ಇದ್ದಾನೆಂದು ಹೇಳಿದರೆ ಅಭಿಮಾನಿದೇವತೆಗಳಲ್ಲಿದ್ದಾನೆಂದು ತಿಳಿಯಬೇಕು. ಆದರೆ ಪ್ರಕೃತ ಅಧಿಕರಣದ ಭಾಷ್ಯದಲ್ಲಿ ಆದಿತ್ಯಾದಿ ಪದಗಳಿಗೆ ಆದಿತ್ಯ ಮಂಡಲ ಮೊದಲಾದ ಜಡವಾಚಕಗಳನ್ನು ಅಂಗೀಕರಿಸುವ ಮೂಲಕ ಆಕ್ಷೇಪ ಮತ್ತು ಸಮಾಧಾನವನ್ನು ಮಾಡಿದ್ದಾರೆ. ಏಕೆಂದರೆ ಮುಂದಿನ ಅಧಿಕರಣದಲ್ಲಿ ಹೀಗೆ ಹೇಳಿದ್ದಾರೆ - "ಯ ಆತ್ಮನಿ ತಿಷ್ಠನ್" ಇತ್ಯಾದಿ ವಾಕ್ಯಗಳಲ್ಲಿ 'ಆತ್ಮಾದಿ' ಶಬ್ದಕ್ಕೆ ತದಭಿಮಾನಿಯಾದ ಚತುರ್ಮುಖಬ್ರಹ್ಮನೆಂಬ ಅರ್ಥವನ್ನು ಬೃಹದ್ಭಾಷ್ಯದಲ್ಲಿ ಹೇಳಿದ್ದರು. ಈ ಅಧಿಕರಣದ ಭಾಷ್ಯದಲ್ಲಿ ಜೀವನೆಂಬ ಅರ್ಥವನ್ನೇ ಅಂಗೀಕರಿಸಿ ಜೀವಾಂತರ್ಯಾಮಿಗೂ ಜೀವನಿಗೂ ಭೇದವನ್ನು "ಭೇದೇನೈವಮ್" ಎಂಬ ಸೂತ್ರದಲ್ಲಿ ಹೇಳಿದ್ದಾರೆ. ಅದರಂತೆ ಇಲ್ಲಿಯೂ ತಿಳಿಯಬೇಕು. ಆದ್ದರಿಂದಲೇ ಆ ಸೂತ್ರದ ಭಾಷ್ಯದಲ್ಲಿ "ಸ ಯಶ್ಚಾಯಂ ಪುರುಷೇ" ಎಂದಷ್ಟೇ ಹೇಳಿದ್ದಾರೆ. ಹೀಗೆ ಕೆಲವರ ಸಮಾಧಾನ.

**भावदीपः** – चन्द्रिकायां तु तत्त्वप्रदीपादिप्राचीनटीकारीत्या आदित्यादिपदानाम् आदित्यादिदेवतार्थत्वमेवोपेत्य अग्नेरक्षिदेवतास्थत्वे प्राचीनादित्यदेवतास्थोऽपि स एवेत्याक्षेपे अक्षिदेवतास्थस्य विष्णुत्वादादित्यदेवतास्थोऽपि स एवेति समाधिरिति सङ्गतिरुपपादिता ।

ಚಂದ್ರಿಕಾಗ್ರಂಥದಲ್ಲಿ ತತ್ವಪ್ರದೀಪ ಮೊದಲಾದ ಪ್ರಾಚೀನಟೀಕಾಕಾರರ ಪಕ್ಷವನ್ನು ಒಪ್ಪಿ ಆದಿತ್ಯಾದಿ ಪದಗಳಿಗೆ ಆದಿತ್ಯಾದಿ ದೇವತೆಗಳೆಂಬ ಅರ್ಥವನ್ನೇ ಸ್ವೀಕರಿಸಿದ್ದಾರೆ. ಆದ್ದರಿಂದ ಅಗ್ನಿಯು ಅಕ್ಷಿ ದೇವತೆಯಲ್ಲಿ ಇದ್ದಾನೆಂದು ಇಲ್ಲಿ ಹೇಳಿದರೆ ಹಿಂದೆ ಆದಿತ್ಯದೇವತೆಯಲ್ಲಿಯೂ ಸಹ ಅಗ್ನಿ ಇದ್ದಾನೆಂದು ಆಕ್ಷೇಪ ಬರುತ್ತದೆ. ವಿಷ್ಣು ಅಕ್ಷಿದೇವತೆಯಲ್ಲಿ ಇದ್ದಾನೆಂದು ನಿರ್ಣಯವಾದರೆ ಆದಿತ್ಯನಲ್ಲಿಯೂ ವಿಷ್ಣುವೇ ಇದ್ದಾನೆಂದು ನಿರ್ಣಯವಾಗುತ್ತದೆ. ಹೀಗೆ ಹಿಂದಿನ ಅಧಿಕರಣದಿಂದ ಈ ಅಧಿಕರಣಕ್ಕೆ ಸಂಗತಿಯನ್ನು ಹೇಳಿದ್ದಾರೆ.

**भावदीपः** – सङ्गतिपरतया व्याख्यातमेव भाष्यं पूर्वपक्षतद्युक्तितत्फलोक्तिपरतयाऽपि व्याकुर्वन् तत्राप्यग्निरेवोच्यत इति प्रतिज्ञार्थं तावदाह – **य एषोऽन्तरक्षणीति** ।। कुत इत्यत आदित्यस्थत्वादिति भावेन प्रवृत्तस्य 'य एष आदित्ये' इत्यादेरत इत्यन्तस्य भाष्यस्यात इत्युक्त्या यत इत्यध्याहृत्यार्थमाह – **यत इति** ।

ಸಂಗತಿಪರವಾಗಿಯೇ ವ್ಯಾಖ್ಯಾನಿಸಿದ ಭಾಷ್ಯವನ್ನು ಪೂರ್ವಪಕ್ಷ ಹಾಗೂ ಪೂರ್ವಪಕ್ಷಯುಕ್ತಿಯನ್ನು ಪೂರ್ವಪಕ್ಷಫಲ ಪರವಾಗಿ ವ್ಯಾಖ್ಯಾನಿಸುತ್ತಾ ಅಗ್ನಿಯೇ ಪ್ರತಿಪಾದ್ಯನಾಗಿದ್ದಾನೆಂಬ ಪ್ರತಿಜ್ಞಾಭಾಗವನ್ನು "ಯ ಏಷೋಽನ್ತರಕ್ಷಣಿ" ಇತ್ಯಾದಿ ವಾಕ್ಯದಿಂದ ಪ್ರತಿಪಾದಿಸುತ್ತಿದ್ದಾರೆ. ಏಕೆಂದರೆ ಅಗ್ನಿಯೇ ಆದಿತ್ಯನಲ್ಲಿದ್ದಾನೆ. ಈ ಅಭಿಪ್ರಾಯದಿಂದ ಹೊರಟಿರುವ "ಯ ಏಷಃ ಆದಿತ್ಯೇ" ಎಂಬಲ್ಲಿಂದ ಪ್ರಾರಂಭಿಸಿ "ಅತಃ" ಎಂಬಲ್ಲಿಯ ತನಕದ ಭಾಷ್ಯವನ್ನು "ಯತಃ" ಎಂಬುದರಿಂದ ವ್ಯಾಖ್ಯಾನಿಸುತ್ತಿದ್ದಾರೆ. ಭಾಷ್ಯದಲ್ಲಿ "ಅತಃ" ಎಂದಿರುವುದರಿಂದ "ಯತಃ" ಎಂಬ ಪದವನ್ನು ಅಧ್ಯಾಹಾರ ಮಾಡಿಕೊಳ್ಳಬೇಕು.

**भावदीपः –** भाष्ये युक्तिसूचनायाग्नीनामित्युक्तावप्याकाङ्क्षाक्रमेण तद् व्याख्यातुं श्रौताहमादिपदस्यैकवचनानुरोधेनाग्नेरित्युक्तम् । श्रुतौ स एवेत्युक्तेरग्नेरेवेत्युक्तम् ।। **अत एवेति।। अ**ग्नेरादित्यस्थत्वादेवेत्यर्थः ।

अक्ष्यादित्ययोरैक्यादिति वाक्यमक्षिस्थोऽग्निरित्यत्रादित्यस्थत्वस्यैव हेतुत्वोपपादकत्वेन व्यावर्त्य शङ्कापूर्वं व्याचष्टे – **नच वाच्यमिति ।।**

ಭಾಷ್ಯದಲ್ಲಿ ಯುಕ್ತಿಯನ್ನು ಸೂಚನೆ ಮಾಡುವುದಕ್ಕಾಗಿ "ಅಗ್ನೀನಾಮ್" ಎಂದು ಹೇಳಿರಬಹುದಿತ್ತು. ಆದರೆ ಆಕಾಂಕ್ಷಾಕ್ರಮದಿಂದ ಅದನ್ನು ವ್ಯಾಖ್ಯಾನಿಸಲು ಶ್ರುತಿಯಲ್ಲಿ ಏಕವಚನದಿಂದ ಕೂಡಿರುವ "ಅಹಂ" ಮೊದಲಾದ ಪದವಿರುವುದರಿಂದ "ಅಗ್ನೇಃ" ಎಂದೇ ಟೀಕೆಯಲ್ಲಿ ಹೇಳಿದ್ದಾರೆ. ಶ್ರುತಿಯಲ್ಲಿರುವ "ಸ ಏವ" ಎಂಬುದಕ್ಕೆ "ಅಗ್ನೇರೇವ" ಎಂಬುದು ವ್ಯಾಖ್ಯಾನವಾಗಿದೆಯೆಂದು ತಿಳಿಯಬೇಕು. "ಅತ ಏವ" ಎಂಬುದಕ್ಕೆ ಅಗ್ನಿಯು ಆದಿತ್ಯನಲ್ಲಿ ಇರುವವನೆಂದು ಅರ್ಥ.

"ಅಕ್ಷ್ಯಾದಿತ್ಯಯೋರೈಕ್ಯಾತ್"- "ಅಕ್ಷಿ ಹಾಗೂ ಆದಿತ್ಯರಿಗೆ ಐಕ್ಯವಿರುವುದರಿಂದ" ಎಂಬ ವಾಕ್ಯವನ್ನು ಅಗ್ನಿಯು ಅಕ್ಷಿಸ್ಥನಾಗಿದ್ದಾನೆನ್ನಲು ಆದಿತ್ಯಸ್ಥವೇ ಹೇತುವಾಗಿದೆ ಎಂಬುದನ್ನು ಉಪಪಾದಿಸುವುದಕ್ಕಾಗಿ ವ್ಯಾವರ್ತ್ಯವಾದ ಶಂಕೆಯನ್ನು ತೋರಿಸುವ ಮೂಲಕ "ನಚ" ಎಂಬ ವಾಕ್ಯದಿಂದ ವ್ಯಾಖ್ಯಾನಿಸುತ್ತಿದ್ದಾರೆ.

**भावदीपः –** आदित्यः आदित्यमण्डलाभिमानी चक्षुरूपान्तरेण चक्षुर्देवता भूत्वा अक्षिणी गोलके प्राविशदित्यैतरेयश्रुतावादित्यमण्डलस्य यद्देवताकत्वं चक्षुर्गोलकस्यापि तद्देवताकत्वरूपैकविधत्वोक्तेरित्यर्थः । भाष्यस्थैक्यपदमेकविधत्वपरम् । अक्ष्यादित्यपदे तु जडपरे इति भावः ।

"ಆದಿತ್ಯಃ ಆದಿತ್ಯಮಂಡಲಾಭಿಮಾನೀ ಚಕ್ಷುಃ ರೂಪಾಂತರೇಣ ಚಕ್ಷುರ್ದೇವತಾ ಭೂತ್ವಾ ಅಕ್ಷಿಣೀ ಗೋಲಕೇ ಪ್ರಾವಿಶತ್"- ಆದಿತ್ಯ ಮಂಡಲಾಭಿಮಾನಿಯಾದವನು, ಚಕ್ಷುಃ = ಮತ್ತೊಂದು ರೂಪದಿಂದ ಚಕ್ಷುರ್ದೇವತೆಯು ಭೂತ್ವಾ = ಆಗಿ, ಅಕ್ಷಿಣೀ = ಅಕ್ಷಿಗೋಲಕದಲ್ಲಿ, ಪ್ರಾವಿಶತ್ = ಪ್ರವೇಶಿಸಿದನು. ಹೀಗೆ

ಆದಿತ್ಯಮಂಡಲದಲ್ಲಿ ಯಾವ ದೇವತೆ ಇದ್ದಾನೋ ಚಕ್ಷುರ್ಗೋಲಕದಲ್ಲಿಯೂ ಅವನೇ ಇದ್ದಾನೆಂಬ ಏಕವಿಧತ್ವವನ್ನು ಶ್ರುತಿಯು ಹೇಳಿದೆ. ಆದ್ದರಿಂದ ಭಾಷ್ಯದಲ್ಲಿರುವ ಐಕ್ಯಪದಕ್ಕೆ 'ಏಕಪ್ರಕಾರದಲ್ಲಿರುವಿಕೆ' ಎಂದರ್ಥ. ಅಕ್ಷಿ ಹಾಗೂ ಆದಿತ್ಯ ಪದಗಳು ಜಡ ಪರವಾಗಿವೆಯೆಂದು ತಿಳಿಯಬೇಕು.

**भावदीपः** – तत्त्वप्रदीपे तु तयोस्तदभिमानिचेतनत्वमुपेत्यैक्यपदं तद्देवतैक्यपरत्वेन यथाश्रुतमेव व्याख्यातम् । अस्त्वग्नेरेवादित्यस्थत्वं तथाप्यग्निशब्द एव विष्णुपरोऽस्त्वित्यतस्तस्याग्निपरत्वे 'सोऽहमस्मि स एवाहमस्मि' इत्याद्यभ्यासार्थवादसहितबहुश्रुतिभ्य इति न्यायविवरणमनुसृत्याग्नीनामिति भाष्यस्थबहुवचनसूचितयुक्तिमाह – **एतस्मिन्निति** ।। बहुश्रुतिभ्य इत्यत्र बहुवचनान्तश्रुतिभ्यो बह्वग्निश्रुतिभ्य इत्यर्थद्वयमुपेत्य भाष्यमपि तथा द्र्व्यार्थमिति मत्वा अग्नय इति गार्हपत्य इति चोदाहृतम् ।

ತತ್ತ್ವಪ್ರದೀಪದಲ್ಲಾದರೂ ಆದಿತ್ಯ ಹಾಗೂ ಚಕ್ಷುಃ ಎಂಬ ಪದಗಳಿಗೆ ತದಭಿಮಾನಿಯಾದ ಚೇತನಪರತ್ವವನ್ನೇ ಒಪ್ಪಿ ಐಕ್ಯಪದಕ್ಕೆ ಅವುಗಳ ಅಂತರ್ಯಾಮಿಯಾದವನಿಗೆ ಐಕ್ಯವನ್ನು ಹೇಳುವ ಮೂಲಕ ಯಥಾಶ್ರುತವಾಗಿಯೇ ವ್ಯಾಖ್ಯಾನಿಸಿದ್ದಾರೆ.

ಅಗ್ನಿಯೇ ಆದಿತ್ಯಸ್ಥನಾಗಲಿ ಆದರೆ ಅಗ್ನಿಶಬ್ದವು ವಿಷ್ಣುವನ್ನು ಪ್ರತಿಪಾದಿಸುತ್ತದೆಂದು ಹೇಳೋಣ? ಎಂಬ ಪ್ರಶ್ನೆಗೆ, "ತಸ್ಯ ಅಗ್ನಿಪರತ್ವೇ ಸೋऽಹಮಸ್ಮಿ ಸ ಏವಾಹಮಸ್ಮಿ" ಎಂಬ ನ್ಯಾಯವಿವರಣಕ್ಕೆ ಅನುಸಾರಿಯಾದ ಮತ್ತು "ಅಗ್ನೀನಾಂ" ಎಂಬ ಭಾಷ್ಯದಲ್ಲಿರುವ ಬಹುವಚನದಿಂದ ಸೂಚಿತವಾದ ಯುಕ್ತಿಯನ್ನು ಹೇಳುತ್ತಿದ್ದಾರೆ "ಏತಸ್ಮಿನ್" ಇತ್ಯಾದಿಯಾಗಿ. "ಬಹುಶ್ರುತಿಭ್ಯಃ" ಎಂಬುದಕ್ಕೆ ಬಹುವಚನಾಂತವಾದ ಶ್ರುತಿಗಳಿಂದ ಅಥವಾ ಅನೇಕ ಅಗಿಶಬ್ದಗಳುಳ್ಳ ಶ್ರುತಿಗಳಿಂದ ಎಂಬ ಎರಡು ಬಗೆಯ ಅರ್ಥವನ್ನು ವಿವಕ್ಷಿಸಬೇಕು. ಭಾಷ್ಯವೂ ಸಹ ಹೀಗೆ ಎರಡು ಬಗೆಯ ಅರ್ಥವನ್ನು ವಿವಕ್ಷಿಸಿದೆ ಎಂದು ತಿಳಿದು "ಅಗ್ನಯಃ" ಎಂದು "ಗಾರ್ಹಪತ್ಯಃ" ಎಂದು ಉದಾಹರಿಸಲಾಗಿದೆ.

**भावदीपः** – बह्वग्नीत्यपि बहुवचनान्ताग्निश्रुतिसद्भावाद् गार्हपत्यादिबह्वग्निश्रुतिसद्भावादित्यपि द्वेधा व्याख्येयम् । आदिपदेन 'अग्नीन् परिचचार । कुशलं नः पर्यचारीत् । उपवयन्तं भुञ्जाम' इत्यादि पूर्वत्र । 'अथ हैनमन्वाहार्यपचनोऽनुशशास य एष चन्द्रमसि पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मि' इत्युत्तरत्र वाक्यं गृह्यते । अत एव भाष्ये 'य एष चन्द्रमसि य एष विद्युति' इत्यादिवाक्यद्वयोपादानाय चन्द्रादित्यस्थत्वोपादानाय चापि पदद्वयं तदुक्तिस्तु यथान्वाहार्यपचनाहवनीययोश्चन्द्रविद्युत्स्थत्वम्, तथाऽस्यापि गार्हपत्यस्यादित्यस्थत्वमिति दृष्टान्तत्वेनेति बोध्यम् ।

ಪರಿಪೂರ್ಣಚಂದ್ರಿಕಾ

"ಬಹ್ವಗ್ನಿ" ಎಂಬುದಕ್ಕೂ ಸಹ ಬಹುವಚನಾಂತ ಅಗ್ನಿಶ್ರುತಿವಿರುವುದರಿಂದ 'ಗಾರ್ಹಪತ್ಯ ಮೊದಲಾದ ಅನೇಕ ಅಗ್ನಿಶ್ರುತಿಗಳು ಇರುವುದರಿಂದ' ಎಂದು ಎರಡು ಬಗೆಯಾಗಿ ವ್ಯಾಖ್ಯಾನಿಸಬೇಕು. ಆದಿ ಪದದಿಂದ "ಅಗ್ನೀನ್ಪರಿಚಚಾರ । ಕುಶಲಂ ನಃ ಪರ್ಯಚಾರೀತ್ । ಉಪವಯಂತಂ ಭುಂಜಾಮಃ" ಎಂಬ ಹಿಂದಿನ ವಾಕ್ಯವನ್ನು "ಅಥ ಹೈನಮನ್ವಾಹಾರ್ಯಪಚನೋಽನುಶಶಾಸ ಯ ಏಷ ಚಂದ್ರಮಸಿ ಪುರುಷೋ ದೃಶ್ಯತೇ ಸೋಽಹಮಸ್ಮಿ" ಎಂಬುದಾಗಿ ಮುಂದಿನ ವಾಕ್ಯವನ್ನು ಸ್ವೀಕರಿಸಬೇಕು. ಆದ್ದರಿಂದಲೇ ಭಾಷ್ಯದಲ್ಲಿ "ಯ ಏಷ ಚಂದ್ರಮಸಿ ಯ ಏಷ ವಿದ್ಯುತಿ" ಇತ್ಯಾದಿಯಾಗಿ ಎರಡು ವಾಕ್ಯಗಳನ್ನು ಸ್ವೀಕರಿಸುವುದಕ್ಕಾಗಿ ಮತ್ತು ಚಂದ್ರ ಮತ್ತು ಆದಿತ್ಯರಲ್ಲೇ ಇದ್ದಾನೆಂದು ಉಪಪಾದಿಸುವುದಕ್ಕಾಗಿ ಎರಡು ಬಾರಿ "ಆದಿ" ಪದವನ್ನು ಭಾಷ್ಯದಲ್ಲಿ ಹೇಳಿದ್ದಾರೆ. ಹೀಗೆ ಹೇಳಿದ್ದರಿಂದ ಯಾವರೀತಿಯಾಗಿ "ಅಗ್ನಿಗಳು ಚಂದ್ರ ಮತ್ತು ವಿದ್ಯುತ್‌ಗಳಲ್ಲಿ ಹೇಗೆ ನೆಲೆಸಿದ್ದಾರೋ ಅದರಂತೆ ಗಾರ್ಹಪತ್ಯಾಗ್ನಿಯೂ ಸಹ ಆದಿತ್ಯನಲ್ಲಿದ್ದಾನೆಂದು ದೃಷ್ಟಾಂತದಾರ್ಷ್ಟಾಂತಿಕ ಭಾವವನ್ನು ತಿಳಿಯಬೇಕು.

**भावदीपः** – भाष्ये द्विरुक्तिसूचितां न्यायविवरणे कण्ठोक्तामभ्यासरूपयुक्तिं व्यावर्त्य शङ्कापूर्वमाह – **नचेति ।। अग्नेरादित्यस्थत्वकथनमिति ।।** आदित्यस्थत्ववति विष्णावग्नियुक्ताहंशब्द औपचारिक इत्यर्थः । शास्त्रदृष्ट्येत्युक्तमुख्यत्वाच्छादने नेयमुक्तिः 'अन्तर्यामिणम्' इत्यग्रे स्मृत्युक्तेः तद्व्यावर्त्योवत्यर्था । अत एव स्मारयतीति वक्ष्यति – **यश्चेति ।।** 'स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः ।' इति तैत्तिरीये विष्णोरेवादित्यस्थत्वोक्तेरिति भावः ।।

ಭಾಷ್ಯದಲ್ಲಿ ದ್ವಿರುಕ್ತಿಯಿಂದ ಸೂಚಿತವಾದ ಮತ್ತು ನ್ಯಾಯವಿವರಣದಲ್ಲಿ ಕಂಠತಃ ಹೇಳಲ್ಪಟ್ಟ ಅಭ್ಯಾಸವೆಂಬ ಯುಕ್ತಿಯಿಂದ ವ್ಯಾವರ್ತ್ಯವಾದ ಶಂಕೆಯನ್ನು ಹೇಳುವ ಮೂಲಕ ವ್ಯಾಖ್ಯಾನಿಸುತ್ತಿದ್ದಾರೆ "ನಚ" ಇತ್ಯಾದಿಯಾಗಿ. ಟೀಕೆಯಲ್ಲಿ "ಅಗ್ನೇಃ ಆದಿತ್ಯಸ್ಥತ್ವಕಥನಂ" ಎಂದು ಇದೆ. ಅಂದರೆ ಆದಿತ್ಯಸ್ಥವೆಂಬ ಧರ್ಮವಿರುವ ವಿಷ್ಣುವಿನಲ್ಲಿ ಅಗ್ನಿಯಿಂದ ಪ್ರಯೋಗಿಸಲ್ಪಟ್ಟ 'ಅಹಂ' ಶಬ್ದವು ಔಪಚಾರಿಕವಾಗಿದೆಯೆಂದು ತಿಳಿಯಬೇಕು.

"ಶಾಸ್ತ್ರದೃಷ್ಟ್ಯಾ" ಎಂಬ ಸೂತ್ರದಲ್ಲಿ ಹೇಳಲ್ಪಟ್ಟ 'ಅಹಂ' ಶಬ್ದಕ್ಕೆ ಮುಖ್ಯಾರ್ಥವನ್ನು ಆಚ್ಛಾದನೆ ಮಾಡಿ ಈ ಮಾತುಗಳು ಹೇಳಲ್ಪಟ್ಟಿವೆ. "ಅಂತರ್ಯಾಮಿಣಂ" ಎಂಬುದಾಗಿ ಮುಂದೆ ಹೇಳುವ ಸ್ಮೃತಿಯ ಮಾತಿನಿಂದ ವ್ಯಾವರ್ತ್ಯವಾದ ಶಂಕೆಯನ್ನು ತಿಳಿಸುವುದಕ್ಕೋಸ್ಕರ ಈ ಮಾತು ಹೇಳಲ್ಪಟ್ಟಿದೆ. ಆದ್ದರಿಂದಲೇ 'ಸ್ಮಾರಯತಿ' ಎಂದು ಮುಂದೆ ಹೇಳುತ್ತಾರೆ. "ಯಶ್ಚ" ಎಂಬ ಟೀಕಾಮಾತಿಗೆ ಹೀಗೆ ಅರ್ಥ - 'ಸ ಯಶ್ಚಾಯಂ ಪುರುಷೇ ಯಶ್ಚಾಸಾವಾದಿತ್ಯೇ ಸ ಏಕಃ' ಎಂದು ತೈತ್ತಿರೀಯದಲ್ಲಿ 'ವಿಷ್ಣುವೇ ಆದಿತ್ಯಸ್ಥನೆಂದು ಹೇಳಿದ್ದರಿಂದ' ಎಂದು ತಿಳಿಯಬೇಕು.

